

भारतसाधुरत्नमालायाः

# प्रस्तावना.

अयि प्रियबान्धवाः! जानन्त्येव तत्रभवन्तो भवन्तः सकलधरणीतले तैस्तैः सहृदयैर्गीयमानं भारतवर्षस्य प्राचीनं सौभाग्यं. यदा च सर्वेऽपि जना गाढाज्ञानान्धकारमग्ना न मानवकर्तव्यमजानन्, तदा खलु इदमेव भारतवर्षं सर्वेभ्यः कर्तव्यमुपदिदेश. साम्प्रतं च तदेव अधोगतिमग्नं विलोक्य दुःखायमानाः सज्जनास्तत्कारणं जिज्ञासन्ते. जिज्ञासमानाश्च सत्वहानिं तमोगुणवृद्धिं च तत्त्वेन निश्चिन्वते.

ईश्वरविश्वासात् सत्त्ववृद्धिः, सत्त्ववृद्धेश्च दृढोद्योगित्वं, तस्माच्चैहिकं सुखमिति कारणपरंपरा विश्रुतैव. तस्यास्य सर्वसुखस्य निदानं परमात्मविश्वासं जनयितुं तत्कल्पानां भक्तानां साधूनां चरिताभ्यास आवश्यकः. यो हि यत् भूयोभूयोऽभ्यस्यति तस्मिन्नेव स विश्वसितीति बहुशो दृष्टम्. तानीमानि संस्कृतभाषायामतिदुर्लभान्यवलोक्याहं लिखितुं प्रयते. यदि अलौकिककर्तव्यबोधकानि परमात्मविश्वासनिदानानि साधूनां चरितानि बालाः सपरिश्रमं पठिष्यन्ति तदा तेऽपि परोपकारपरा भूत्वा स्वमातृभूमिं समुद्धरिष्यन्ति. बान्धवाः! एतदेव मनसिकृत्वा मया 'भारतसाधुरत्नमाला' ग्रथितुमारब्धा. यस्याः प्रथमं रत्नं 'श्रीमदाचार्यवल्लभाचार्यचरितम्' इति. यद्यनेन मद्देशबान्धवाः सन्तुष्टा भविष्यन्ति तदाऽचिरादेवान्येषामपि श्रीरामदासप्रभृतीनां चरितानि लिखित्वोपायनीकरिष्यामीति शम्.

लेखकः

# कृतज्ञताप्रदर्शनम् ।

समस्तश्रुतिस्मृतिपुराणागमप्रमाणपरंपरासन्मानित-

शुद्धाद्वैतपुष्टिमार्गसम्प्रदायप्रतिष्ठापनपरमाचार्य-

वेदव्यासविष्णुस्वामिमतवर्तिश्रीश्रीमद्वल्लभा-

चार्यवंशावतंसश्रीमद्बालकृष्णचरण-

नलिनमिलिन्दायमानमानस-

गोस्वामिकुलकौस्तुभ-

श्री १०८श्रीगोकुलनाथमहाराजचरणैरस्य चरितस्य

प्रकाशने कृतसाहाय्योऽहं कृतज्ञता

प्रकटीकरोमि.

ग्रंथकर्ता.



# ग्रंथप्रस्तावना.



सभ्याः ! सनातनधर्मानुयायिनः ! भक्तवराः ! प्रियबान्धवाः ! इदं खलु सकललोकमान्यानां, संसारिकजनदुःखदूरीकरणतत्पराणां, परमभागवतानां, पुष्टिमार्गप्रसारबद्धकक्षाणां, श्री १०८ श्रीमदाचार्यमहाप्रभुश्रीवल्लभाचार्यचरणानां चरितामृतं भवद्भ्य उपायनीकुर्वन्नहं निःसंशयं निरतिशयभाग्यशाली. यतः क्व च त्रैलोक्यवन्द्यचरणा भगवद्भक्त्यतिशयेन वशीकृतत्रैलोक्यनाथश्रीनाथाः श्रीमदाचार्यचरणाः, क्व च मादृशः साधारणो मानवः. यद्यपीह जगतीतले बहवो बृहस्पतिसमा विद्वांसः स्युः, स्युश्च अगणितधनसम्पन्ना भूमिकुबेरायमाणा इभ्या जनास्तथापि यस्य वाणी भगवद्भक्तानां गुणगणं न गायति तथा यस्यैकापि मुद्रा भगवद्भक्तानां यशः प्रसारयितुं न व्येति तादृशस्य जडकल्पस्य विदुषो विद्यया तथा धनिकस्य धनेन को वा लाभः. ये खलु पण्डिताः परमात्मप्रदत्तामलौकिकबुद्धिं तद्गुणवर्णनाय तथा तद्भक्तानां वा यशोगानाय नोपयुञ्जते मन्ये तेभ्यस्तादृशीं दिव्यां बुद्धिं प्रदाय परमात्मोपतप्येत् ! ये हि धनिकाः सदाऽर्जनैकव्यवसायाः कदाऽपि सत्सु कर्मसु परोपकाराय स्वल्पमपि धनं न ददति तादृशानां तेषां मृत्समेनासत्समेन वा धनेन को वा लाभः. तस्माद्येन केनाऽपि नरेण स्वस्मै भगवता प्रदत्तं लौकिकमलौकिकं वा धनं परोपकाराय योजनीयमेव. इमं निसर्गकृतं नियममंगीकृत्य मया

स्वल्पमपि बुद्धिधनमत्रोपयुक्तं. अनेन स्वल्पस्याऽपि भगवद्भक्तगुणानुवादस्य विधानेनात्मनो जन्म सफलं मन्ये. भगवान् त्रैलोक्यनाथोऽवश्यमेव मे सर्वान्मनोरथान् सफलीकृत्य श्रीमदाचार्यमहाप्रभुवल्लभाचार्यसदृशानामन्येषां भगवद्भक्तानां कीर्तिवर्णने मम मतिं योजयेत्. प्रियपाठकाः ! मदीये लेखे बहवो दोषाः स्युस्तथापि परमरमणीयं श्रीमदाचार्यचरणानां चरितामृतमवश्यमेव युष्मान् संतोषयेदित्याशासे.

विदुषां वशंवदः

**श्रीपादशास्त्री.**





# मुख्यविषयानुक्रमः







# १ उपक्रमः

१ धर्मकल्पना.

२ कर्मकाण्डप्राधान्यम्.

३ ज्ञानकाण्डोदयः.

४ भक्तिमार्गप्रादुर्भवः.

५ भक्तिसर्वस्वे पुष्टिमार्गे सर्वसंभवः.

( १ )

प्रियवाचकाः ! अस्मिन्नतिविचित्रप्राणिगणसंकुले नानाविधवस्तुसंघातव्याप्रुते जगतीतले मानवः खलु परमबुद्धिमानतिश्रेष्ठः प्राणी. यतोऽयं सर्वेषामपि पश्वादीनां क्रियाः कुर्वंस्तज्जन्यं सुखलवं संपाद्यातृप्तः सततमुद्यमशीलस्तैर्दुष्कराः क्रियाः कुर्वन्नात्मानं सुखिनं करोति. यथाहि पश्वादयः स्वनिवासार्थमतिकुशाग्रमतिभिः शिल्पिभिरपि दुष्कराणि गृहाणि निर्मान्ति तथैव मानवोऽपि निर्माति. परन्तु मानवः खलु यां कामप्येकामलौकिकीं कल्पनां मनसिकृत्वा सकलं जगत् सुखमयं करोति तां पश्वादयो न जानन्ति. पाठकाः ! सैषा कल्पना धर्मकल्पनानाम. दृढसंस्कारशाली मानवः सततं समा-

गच्छतो नानाविधाननुभवान् सम्यक् स्मरन् दुःखपरिहाराय तथा सुखस्य च प्राप्तये तादृशान्नियमान्विधत्ते यानग्रिमा जनाः शास्त्रपदेनाभिदधते. योहि मानववंशसंभूतो जीवस्तादृशनियमानुरोधेन वर्तते तं जनाः सदाचारिणं मन्यन्ते सोऽपि तथा वर्तमानोऽवश्यमेवैहिकं सुखं पर्याप्तं लभमानः पारलौकिकमपि स्वर्गादिकं फलं लभते. यथाहि वैद्येन कथितं पथ्यमाचरन् रुग्णो नियते समय आरोग्यं प्राप्नोति तथा शास्त्रे दृढं विश्वसंस्तदुक्तं निषिद्धं परिहरन् विहितं च समाचरन्नवश्यमेव स्वयं सुखी भूत्वा परानपि सुखाकरोति. तस्मात् सकलमानवजातिसौख्यार्थं प्रत्येकेन मानवेन धार्मिकेण भवितव्यं. यो हि अधार्मिकः कुमार्गगामी भवति स न केवलमात्मानमेव विनाशयति किंतु स्वसजातीयानपि. अस्तु. वाचकाः ! ये खलु शास्त्रे धर्मार्थकाममोक्षरूपाश्चत्वारोऽभिहिताः पुरुषार्थास्तेषां सर्वेषामपि धर्ममूलकत्वेन धर्मस्य पूर्वं निर्देशः. अर्थकामौ च निःसंशयं लौकिकसुखरूपाविति तयोर्धर्ममूलकत्वमभिदधता शास्त्रेण लौकिकं सुखमपि धर्मेणैव लभ्यत इत्युक्तं भवति. यद्यपि स्युर्नामास्मिन् मृत्युलोके विभिन्नशीलशालिनां मानवानां धर्मकल्पना विभिन्नाः परन्तु तासु कानिचित्तत्त्वान्यनुस्यूतानि दृश्यन्ते. तेन मानवजातिर्येन केनापि रूपेण धर्ममाचरन्ती सुखं लभत इति शक्यं वक्तुं. पश्वादयस्तु केवलं निसर्गाधीना अलौकिकबुद्धिवैभवहीना न स्वकल्याणं भावयन्ति. अतएव न तदनुकूलं धर्मं परिकल्पयन्ति.

( २ )

यदा च सामान्यतो मानवाः साधारणप्रज्ञाः पश्वादिभ्यः स्वकीयं श्रैष्ठ्यं संपादयितुकामाः प्रथमं धर्मनियमानकार्षुस्तदा यत्

खलु पश्वादय आचरितुं न प्रभवन्ति तदेव तेऽकथयन्. पश्वादयो हि स्वार्थबुद्धिप्रेरिता इन्द्रियाधीनाः स्वेन्द्रियतृप्तिमेव स्वकर्तव्यं मन्यन्ते. नैवं मानवेन भवितव्यं. ये खलु दीना दुर्बला जना इह लोके विद्यन्ते तेषां साहाय्यं विधेयं स्वेन्द्रियसुखानि न्यूनीकृत्यापि तेऽवश्यं रक्षणीया इति नियमांस्ते चक्रुः. एवंरीत्या ते प्राचीना अस्मत्पूर्वजा मानवश्रेष्ठा धर्मबोधकनियममयान् धर्मग्रन्थान् यदा विरचयामासुस्तदा खलु इदं कर्मकाण्डं प्रादुरभूत्. अस्मिन् कर्मकाण्डे सदाचारनियमास्तथा यज्ञप्रकारनिरूपणमुखेन परोपकारनियमा एव कथिताः. कथं ब्रह्मचारिणाऽध्ययनार्थं गुरुगृहे निवसता वर्तनीयं. कथं च ततः सम्यगधीत्य स्नात्वा गृहस्थाश्रमः स्वीकर्तव्यः. कथं च ततोऽपि नियते समये वानप्रस्थाश्रमं गृहीत्वा ततः संन्यस्तव्यमिति. इमे चत्वारोऽप्याश्रमा मानवजीवितस्यात्यन्तमुपकारका इति सार्वजनीनं. बान्धवाः ! साधारणतो धर्मो हि द्विविधः. स्वयमनुष्ठेयः परान् प्रति उपदेष्टव्यश्च. तत्र प्राथमिकं विना न द्वितीयः सफलो भवति. तस्मात्प्रथमं चतुर आश्रमान् कथयित्वा ततः परोपकाररूपं द्वितीयं धर्ममुपदिदिक्षु शास्त्रं यज्ञरूपमकथयत्. यद्यपि सर्व एव धर्मः स्वयमनुष्ठीयमानः परोपदेशपरो भवति. तथापि केवलं स्वात्मोन्नतिफलमभिसंधाय मया तथा भेदो वर्णितः.

मानवजातिरपि निसर्गत एवेतरवत् स्वार्थप्रेरिताऽशिक्षिताऽनियमितचित्तवृत्तिर्महतेऽनर्थाय स्यादिति मन्यमाना उदारबुद्धयः प्राचीना ऋषयो धर्मनियमान्विधाय तां नियंत्रितामकुर्वन्निति मयोपरिष्टादेव प्रतिपादितं. सा च कथं चातुर्येण नियमितेति तांस्तान् धर्मग्रंथान् प्रत्यक्षीकृत्याधुनिका अपि विद्वांसो विस्मयन्ते. सज्जनाः !

वैश्वदेवमारभ्य दर्शपौर्णमासप्रभृतीननेकानश्वमेधान्तान् महायागानुपदिशञ्छास्त्रं क्रमेणातिप्ररूढां स्वार्थबुद्धिं न्यूनीकरोत्येव. नहि अनेकदिनसाध्ये बह्वायासमयेऽगणितवित्तव्यये यागविशेषे पश्वादिवत्स्वेन्द्रियतृप्तितत्पराणां मानवानामांजस्येन प्रवृत्तिर्भवति. नापि स पारलौकिके फले दृढं विश्वसिति. एवंच यागविधानार्थं प्रवर्तमानो मानवश्रेष्ठोऽवश्यमेव चिरसंचितां स्वार्थबुद्धिं न्यूनीकृत्यैव तत्र प्रवर्तत इति वक्तव्यमेव भवति.

वाचकाः ! न केवलमिह वयं कर्मकाण्डं सविशेषं निरूपयितुं प्रवृत्ताः किंतु पुष्टिमार्गस्य निरतिशयेन निःश्रेयसप्रदत्वमभिधातुं. तेन कर्मकाण्डनिरूपणं प्रासंगिकमेव. अतो विस्तरभयादधुनोपरमामः.

( ३ ).

यथा यथा स्वार्थबुद्धित्यागाय लोकेभ्यो यथाक्रमं तानि तानि पारलौकिकफलानि कर्माण्युपादिशंस्ते ते ऋषिश्रेष्ठास्तथा तथा कर्मकाण्डं परमवर्धत. यागादयोऽपि क्रमेण न्यूनाधिकैर्दिनैरनुष्ठीयमानाः परान् परमुपाकुर्वन्. एवंच कर्मकाण्डसमये सर्वोऽपि मानवजातिकल्याणकरो धर्मः कर्मरूपतामेव प्राप. यत्किंचिदपि मानवजातेः कल्याणं तत् सर्वमपि कर्मानुष्ठानादेव लभ्यत इति सर्वेऽप्यमन्यन्त.

एवं गच्छति काले विचारं विनाऽनुष्ठीयमानास्ते यागविशेषाः केवलमनुकरणरूपतां प्राप्ता न मानवजातेः शीलं वर्धयितुं शेकुः. यथा हि विचारः शीलं वर्धयितुं शक्नोति नैवं कर्माचरणमिति सर्वेऽपि साधारणा जना जानन्ति. यागादीननुष्ठीयाऽपि सच्छी-

लतामप्राप्तान् मानवान् वीक्ष्य साधारणा जना यागानुष्ठानस्य कल्याणकरत्वे समदिह्यन्. संजातसंदेहास्ते कर्मकाण्डोक्तयागानुष्ठानादप्यपरं धर्ममन्वेषयन. एवमन्वेषणपरास्ते कर्माचरणन्यूनीकृतस्वार्थबुद्धयो जना ज्ञानमेव निःश्रेयसप्रदममन्यन्त. युक्तमप्येतत्. कथमन्यथा चोदनैकसमधिगम्ये यागादीनां निःश्रेयसप्रदत्वे जनानां संदेहनिवृत्तिः स्यात्. अनिवृत्तसंदेहश्च बलादेव प्रवर्तितः शिशुरपि स्वकार्यं न सम्यगनुतिष्ठति तदा का कथा विचारिणां. एवंच 'कथं यागः पारलौकिकं फलं ददाति.' लोके यद्वैचित्र्यं दृश्यते तत्किंमूलकं ? पुनर्जन्मास्ति न वा ? अस्ति न वाऽस्य जगत उत्पादयिता ? स पापिनः शास्ति न वा ? सकलदुःखमग्नैः सांसारिकैर्जनैः स्वदुःखपरिहाराय कर्मकाण्डोक्ता यागा एवानुष्ठेया उतास्ति साधनान्तरं ? मोक्षो हि केवलं कर्मण एव भवति किंवाऽन्येन केनाप्युपायेन ? इत्यादयः प्रश्नाः सज्जनानां चेतःसु बद्धमूला अजायन्त. तांश्च निराकर्तुं कर्मकाण्डं नाशकदिति ज्ञानकाण्डं समुद्भवत्. उदिते च ज्ञानकाण्डे ते ते संदेहाः क्रमेणानश्यन. बान्धवाः ! ज्ञानकाण्डस्य माहात्म्यं यद्यपि निरतिशयं तथापि न तत् ज्ञानोत्तरभक्तिमाहात्म्यस्य कणिकामपि स्पृशति. अस्तु. इदं चाग्रे स्पष्टतरमुपपादयिष्यामः.

यदा च ज्ञानकाण्डोदयः समभवत्तदा ते विचारशीला जना लब्धावकाशाः क्रमेण जीवस्य स्वरूपं तथा जगदुत्पत्तिकारणं परमात्मनः स्वरूपं सम्यगुपपत्तिभिर्विचार्य स्वसंदेहान्निराचक्रुः वीतसंदेहाश्च सोत्साहं कर्मकाण्डोक्तेषु यागेषु तथा सदाचारेषु च प्रावर्तन्त. एवंरीत्या ज्ञानकाण्डं कर्मकाण्डप्रामाण्यदार्ढ्यायैव समभवदिति जना अमन्यन्त. अधुनापि केचन जना मन्यन्ते. एवं प्रयाते

कियति काले समुदितमपि ज्ञानकाण्डं प्रबलेन कर्मकाण्डेन तिरस्कृतं कथमपि तत्साधनभावेनातिष्ठत्. न स्वातंत्र्येण स्वपुरुषार्थं कमपि प्रत्यपादयत्. तेनोदितमपि ज्ञानकाण्डमसत्सममेवाभवत्.

एवं स्थिते तस्य ज्ञानकाण्डस्य पुनरपि पुरुषार्थदत्वं प्रतिपादयितुं शंकराचार्याः प्रादुर्भूय ज्ञानस्यैव निरतिशयमोक्षप्रदत्वं प्रतिष्ठापयामासुः. खण्डयामासुश्च कर्मणो मोक्षप्रदत्वं. तेन ज्ञानकाण्डमपि पुनर्लब्धख्याति कर्मकाण्डं तिरस्कृत्य परमप्रकाशेन सकलजनाज्ञानान्धकारं नाशयामास. ततश्च क्रमेण न्यूनीभूतं कर्मकाण्डं केवलं चित्तशुद्धिपर्यन्तमेव कार्यकार्यभूत्.

( ४ )

एवं संजाते ज्ञानकाण्डोदये न्यूनीभूते कर्मकाण्डोक्तकर्माचरणे केवलं ज्ञानमेव श्रेयःसाधनं मन्वानाः साधारणा जनाः कर्माचरणत्यागेनाशुद्धचित्ता उत्कृष्टं ज्ञानमलभमाना यथेच्छमवर्तन्त. तेन सर्वमेव व्याकुलमभवत्. साधारणप्रज्ञा जनाः केवलं मानसिकीं कल्पनामेव ज्ञानपदेन व्यवहरन्तस्तदाचरणविमुखा निःसंशयमात्मज्ञान्यभिमानं वहन्तः संसारेऽनर्थावहान् प्रकारानकुर्वन्. ज्ञानकाण्डस्योत्कर्षं संपादयितुमवतीर्णैः शंकराचार्यैः केवलं मोक्षप्राप्तिः साक्षात्कर्मण एव न संभवति किंतु कर्माचरणं हि तत्र ज्ञानोत्पत्तिद्वारा कारणमिति कथितं. परंतु तावतैव कर्मकाण्डोक्तं कर्माचरणं निष्फलं मन्यमाना जनाश्चित्तशुद्ध्यर्थमपि न तदाचरितुमुत्सुका अभवन्. एवंरीत्या निरुद्धे कर्माचरणे चित्तशुद्ध्यभावाज्ज्ञानमलभमानाः स्वयमन्धा जना यथेच्छं परिवर्तमानाः परानपि घोराज्ञानान्धकारपतितानकार्षुः.

तस्यास्यानर्थस्य नाशाय रामानुजप्रभृतयो वैष्णवाचार्या अजायन्त. रामानुजमाध्वनिम्बार्कवल्लभभेदेनेमे चत्वारो वैष्णवाः. तत्र चित्तशुद्ध्यर्थं कर्माणि आचरितुं जनानुपदेष्टुमसमर्थास्ते परमचातुर्येण श्रुतिसूचितं पुराणनिवेदितं भक्तिमार्गमेव तदर्थं प्रकाशयामासुः. निरुद्धं कर्ममार्गमनुज्जीवयित्वा नूतनस्य भक्तिमार्गस्य प्रसारे कारणान्तरमप्यस्ति. तच्चेत्थं. वाचकाः ! यदोत्तरध्रुवनिवासिन आर्याः क्रमेण प्रवसन्तो भारतभुवं प्राप्य सुखेनातिष्ठन् तदा खलु ते श्रमविभागाय चतुरो वर्णान्विधाय सर्वं लौकिकं कार्यमकार्षुः. प्रापुश्च महान्तमुत्कर्षं. ततश्च गच्छति काले ते परस्परोपकारिणोऽपीमे चत्वारो वर्णाः परस्परद्वेषपरा अजायन्त. तं च द्वेषं स्वीकृत्यान्ये यवनादयः परकीया जनाः कृतप्रवेशा इमां भारतभुवमात्मसात्कृत्वा न्यूनाधिक्येन सर्वानेव चातुर्वर्णिकान् परस्परद्वेषदावानलेन दग्ध्वा नामशेषानकुर्वन्. इमां च महतीमापदं वीक्ष्य बुद्धिमन्तः सर्वे साधुवरा विस्मृतपरस्परद्वेषा इमं पुरातनं द्वेषं शमयितुं प्रायतन्त. श्रुत्युक्तकर्ममार्गस्य पुनरुद्धारे तत्राधिकारविभागस्य जागरूकतया स द्वेषो न शाम्येत्प्रत्युत वर्धेतेति मन्वाना इमं पुराणोक्तं श्रुत्यादिभिरपि संमानितं भक्तिमार्गं प्रसारयामासुः. यथाच श्रुत्युक्तकर्मविधानेऽस्ति अधिकारभेदो जातिभेदो वा न तथा भक्तिमार्गे. भक्तिमार्गे यः कोऽपि मानवः केवलं भगवदाराधनप्रेमाकुलस्तं त्रैलोक्यनाथमनन्यया भक्त्या भजमानो मानवदेहसार्थक्यं कर्तुं शक्नोति. यथाहि श्रुतौ शूद्रस्य त्रैवर्णिकसेवैव विहिता, अयोग्यस्यापि ब्राह्मणादेः सेवाविधानेन शूद्रस्य सद्गतिस्तथा नात्र. अत्र तु सर्वेऽपि मानवाः श्रीमतो भगवतः श्रीकृष्णस्य दासा एव. यथा च दासे गुणाधिक्यतारतम्येन

न्यूनोत्तमभावस्तथैव ब्राह्मणादीनामस्तु. परंतु तत्सेवयोत्तमलोकप्राप्तिर्भवतीति न वैष्णवाः सहन्ते. सर्वेषामपि जीवानां विष्णुसेवनादेव ते मोक्षं प्रतिपादयन्ति. एवंच सर्वेऽपि जना उत्तमाधमगुणशालिनस्तदनुरूपयोग्यताभाजोऽपि भगवतो दासा एवेति.

निर्णीत एवं भक्तिमार्गे क्रमेण कर्ममार्गो नामशेषोऽभवत्. तस्मिन्विनष्टे सति तदीया दोषा अपि परस्परद्वेषादयः प्रलयमगच्छन्. न केवलं दोषनाश एवाभवत्किंतु परस्परानुरागादय उत्कर्षहेतवो बद्धमूला अजायन्त. तेषु च बद्धमूलेषु पुनरैक्यभावमापन्नाः सर्वेऽपि भारतवासिनः स्वदेशस्य तथा स्वराज्यस्य दुरवस्थां मनसि कुर्वाणास्तद्दूरीकरणाय विचारयामासुः.

वाचकाः ! कर्ममार्गं त्यक्त्वा भक्तिमार्गस्य प्रसारे कारणं तथा फलं चेदमेकं. अपरमप्यत्र विद्यते. तदित्थं. यथा श्रौतकर्माचरणेऽस्ति अधिकारिनियमस्तथा मंत्राधिगमोऽपि कारणं. मंत्रोच्चारं विनाऽनुष्ठिता सर्वाऽपि क्रिया भस्महुतसादृश्यमावहतीति तेषां सिद्धान्तः. एवंस्थिते तेषां मंत्राणामधिगमे केवलं त्रैवर्णिकाणामेवाधिकृततया न तत्र शूद्रस्य प्रसंगः. एवंच मंत्रोच्चारणं विना कर्मानुष्ठानस्यासंभवितया शूद्रस्य सर्वथा श्रौते कर्मणि गतिर्न. अथ च ये श्रौते कर्मणि नियुक्तास्त्रैवर्णिका जनास्तेऽपि कालवशादन्यकार्यासक्ता दुरवबोधमंत्राणामर्थज्ञानेऽशक्तास्तादृशमंत्रोच्चारणेन कर्मानुष्ठातुमनुत्सुका अनुष्ठीय चापि मनःप्रसादमलभमानाः सर्वसुलभे प्रेममये साधनक्लेशरहिते भक्तिमार्गे मनो ददतः कर्माचरणेऽत्यन्तमुदासत. तेनाऽपि कारणेन भक्तिमार्गोऽनादिमपि कर्ममार्गं समतिक्रम्य स्वमूलं दृढं बबन्ध. अपिच—यद्यपि वेदस्य प्रामाणिकतया तदुक्तानि कर्माणि

चित्तशुद्ध्यादिकं वा स्वर्गादिकं वा फलं जनयेयुर्नाम तथापि तटस्थस्य मनो यथा रामकृष्णादीनां भक्तिः शीघ्रं हरति नैवं वेदोक्तकर्माणि. उचितमपीदं ! नहि चेतनो जडे तादृग्विश्वसिति यादृक् स्वसदृशे चेतने. नहि पुरुषेणोक्तेऽर्थे यादृशं विश्वासं पथिको बध्नाति तादृशं केवलं पुस्तकलेखे. अतएव न केवलं बहुकालतोपि वेदान्तपुस्तकाभ्यासात्तत्त्वज्ञानं भवति किंतु गुरुकृपयैवेति वेदान्तिनामपि घण्टाघोषः. किमत्र कारणं ? ऋते चैतन्यात्. एवंच स्पष्टचैतन्यानां केवलं परपीडानिवारणार्थमवतीर्णानां रामकृष्णादीनामुपासनया चित्तवृत्तिः शुद्धा स्यात्किंवा गृहीतप्रामाण्यवेदोक्तकर्माचरणेनेति बालकोऽपि वदेत्. तस्मादस्य सकलमान्यस्य सुखदस्य भक्तिमार्गस्य प्रसारे तदीयं सौकर्यं सर्वोपयोगित्वमेव कारणमिति वयं मन्यामहे. एतदेवासत्वेन प्रतिपद्यमानं कर्ममार्गे इति सार्वजनीनं अस्तु. प्रकृतमनुसरामः.

( ५ )

एवंरीत्या कर्ममार्गस्य दुष्करत्वं समवलोक्य प्रवर्तितो भक्तिमार्गः प्रथमं रामानुजाचार्यैः साभिनिवेशं प्रोत्साहितः. सज्जनाः ! नैतावता रामानुजाचार्या एवास्य भक्तिमार्गस्याद्याः संस्थापका इति मन्तव्यं. इहैवाग्रे विष्णुस्वामिमतस्य प्राचीनत्वं प्रतिपादयिष्यते. केवलं तस्य तस्य भक्तिमार्गस्य वा कर्ममार्गस्य वोद्धारकरा अलौकिकाः पुरुषा यदा जायन्ते तदाप्रभृत्येव तं मार्गं प्रसक्तं साधारणा जना मन्यन्ते. अस्तु. यदा च रामानुजाचार्या भक्तिमार्गं सर्वत्र प्रासारयंस्तदा ते तत्त्वज्ञानमपि स्वमतानुसारि विशिष्टाद्वैतरूपं न्यरूपयन्. तथैवाद्यापि कर्ममार्गस्य प्रबलतया तमपि सर्वथा निषेद्धुं ते नाशक्नन्. तेन प्रसृतोऽपि भक्तिमार्गो न सविशेषं फलदोऽभवत्.

ततश्च मध्वाचार्याः प्रादुर्भूय प्रसृतं तमेव भक्तिमार्गं पुनरपि सविशेषं प्रसारयितुं प्रायतन्त. ते च भक्तिमार्गप्रसारार्थं द्वैतं शाश्वतिकं मन्यमाना जीवेश्वरयोः संबन्धं सेवकसेव्यरूपमकल्पयन्. सर्वे जीवा दासास्तस्य भगवतो नारायणस्य, सेवापरपर्यायया भक्त्या सेवकैः सेवितो लौकिको भूपालः संतुष्टो यथा सेवकाननुगृह्णाति तथैव भक्तिप्रवणैः सेवकैर्जीवैः सेवितो नारायणोऽपि सर्वक्लेशजातं विनाशयित्वा सर्वदा सुखमयं स्वलोकं वैकुण्ठं तान्नयतीति तेषां सिद्धान्तः.

वाचकाः ! प्रदर्शिते भक्तिमार्गप्रसारकयोरनयोराचार्ययोर्मतद्वये तादृशो भक्तिमार्गप्रसरो नाभवद्यावान् श्रीवल्लभाचार्यप्रख्यापितेन पुष्टिमार्गेणाभवत्. कथमेतदिति संक्षेपेण विवेचयामि.

श्रीमद्रामानुजाचार्या विशिष्टाद्वैतमतप्रवर्तका भेदमपि सत्यं मन्यन्ते तथाऽभेदमपि. तेनोपासनापि भेदसहकृतैव. यत्र च भेदस्तत्र स्वार्थः पदमाधत्त इति दृष्टचरं. स्वार्थे लब्धपदे परमस्वामिभक्तस्याऽपि सेवकस्य सेवा तादृशी न भवति यादृशी निःस्वार्थस्य सेवकस्य. यादृशी भक्तिस्तादृश एव भगवतः संतोषस्तादृगेव फलमिति तु स्पष्टमेव. तेन भेदशून्या भक्तिरेव गरीयसीति न्यायतः प्राप्तं. मध्वाचार्यास्तु स्पष्टमेव जीवेश्वरयोर्भेदं वदन्तः स्वामिसंतोषेण वैकुण्ठप्राप्तिं फलमुदाहरन्तो न निष्कामभक्तिं कथयन्ति. एवंच संक्षेपतो निर्दिष्टेऽस्मिन् मतद्वये निष्कामभक्तेरवसराभावान्न भक्तिमार्गस्तावन्तमुत्कर्षं प्राप.

श्रीवल्लभाचार्यास्तु भक्तिमार्गं सकलजीवगणकल्याणकरं सर्वोत्कर्षं प्रापयितुमिच्छवस्तत्त्वज्ञानं शुद्धाद्वैतरूपं न्यरूपयन्. बान्धवाः !

तत्त्वज्ञानस्य तथोपासनायाश्चास्ति कार्यकारणभावः. उपासक उपासनाप्रारंभात्पूर्वं स्वोपास्यं वस्तु यदि सम्यग्जानाति 'एवंगुणविशिष्टमिदं वस्तु' इति तदा तथोपासमानोऽवश्यमेव तादृशोपासनायाः फलं लभते. यो हि अविज्ञाय प्रवर्तते न स सिद्धिमाप्नोति. तस्माद्भक्तिमार्गप्रवर्तकैस्तत्तदाचार्यैः स्वीयानि यानि तत्त्वज्ञानानि कथितानि तान्येव तदुपासनायास्तथोपासनाफलस्य दर्शकानीति मन्तव्यं. एवं मन्वान एवाहं श्रीरामानुजाचार्याणां तथा श्रीमध्वाचार्याणां भक्तिमार्गस्य तावानुत्कर्षो नेत्यवोचम्. अस्तु. प्रकृतमनुसरामः.

एवं शुद्धाद्वैतरूपे तत्त्वज्ञाने निरूपिते तदनुरूपा भक्तिः प्रावर्तत. सर्वत्राऽखण्डं कृष्णचैतन्यमेकरूपमिति विज्ञाने तदनुकूला जायमाना चेतःप्रवृत्तिः कृष्णचैतन्यरूपैवाभवत्. यथाच श्रीरामानुजाचार्याणां तथा मध्वाचार्याणां मते केवलं लौकिकराजवदीश्वरोपासनाऽसीत्तथा न पुष्टिमार्गे किंतु सर्वमिदं कृष्णचैतन्यमेव. न मे कोऽपि कामः. कृष्णचैतन्याभिन्नत्वान्मम. एवंच निष्कामैः सेवकैः स्वकर्तव्यबुद्ध्या कश्चन राजा सेव्यते तथैव श्रीकृष्णचन्द्रोपासनाऽपि पुष्टिमार्गीयाणां भक्तानामिति सिद्धं. अतएव तैः श्रीवल्लभाचार्यैः स्वग्रंथे—ये खलु कर्माधिकारिणस्ते हीनाः. ये च ज्ञानाधिकारिणस्ते मध्यमाः. ये च कृष्णार्पितप्राणाः सर्वत्र प्रस्फुरत्कृष्णचैतन्यास्ते उत्तमाधिकारिण इति क्रमोऽपि लिखितः. एवंच कृष्णचैतन्यस्वरूपाभिन्नत्वाज्जीवस्य तस्य चाप्तकामत्वेन जीवस्य पृथक्कामनाभाव एवोचितः.

नन्वेवं शुद्धाद्वैते उपासनासंभव एव कथं ? किंच शंकराचार्यप्रतिपादितादद्वैतादस्य मतस्य को वा भेद इति चेच्छ्रूयतां. अद्वैतेऽस्ति उपासनायाः संभवः. यथाहि प्रोषितभर्तृका तरुणी स्ववल्ल-

भाभिन्नचित्तवृत्तिरपि तं स्ववल्लभमेव मन्यते. यथा च चिरमीक्षणात् प्रतिविम्बाभिन्नं मुखं मन्वानोऽपि प्रेक्षकः स्वमुखं भिन्नं मन्यते तथैव कृष्णार्पितप्राणः परमभागवतः सर्वत्र कृष्णचैतन्यं भावयन्नपि आत्मानं सेवकमेव मन्यते. अयं भावः—भेदमूलकोपासनायां स्वार्थस्य संभवोऽस्ति. अभेदोपासनायां सर्वकामनाशेन फलस्याभावान्निष्कामभक्तेरस्ति संभव इति. नचैतदसंभवीति मन्तव्यं. येषु न भगवतः कृपालेशस्तेषामेवेयं कल्पना भवति नतु तदनुग्रहशालिनां. तस्मादिमां कुकल्पनां विहाय भगवान् श्रीकृष्णः सेवनीयः. ततः संभवोऽस्ति नवेति स्वयं विचारणीयमिति उपरमामः.

श्रीशंकराचार्यस्वीकृताद्द्वैतमार्गाच्छुद्धाद्वैतमार्गस्येयानेव भेदो यत् श्रीशंकराचार्या इदं जगन्मिथ्यामन्यमानास्तत्सिद्ध्यर्थं तस्य मायामूलकत्वं स्वीकुर्वन्ति. नैवं श्रीवल्लभाचार्याः. ते हि सर्वमेव चैतन्यं मन्यमानाश्चेतनत्वेनैवोपासते. बान्धवाः ! न वयमिह अनयोर्महाभागयोस्तत्त्वं विवेचयितुं प्रवृत्ताः किंतु परमवैष्णवानामाचार्यवल्लभार्याणां परमपवित्रं चरितं लिखितुं. तत्र प्रसङ्गतो भक्तिमार्गविवेचनसमये तेषां पुष्टिमार्गोऽपि निरूपितः. अलमिदानीमेतावदेव. इमं विषयं सविस्तरमग्रे निरूपयिष्यामः.

वाचकाः ! भक्तिमार्गप्रवर्तकैः श्रीरामानुजप्रभृतिभिराचार्यैः प्रवर्तितस्यास्य भक्तिमार्गस्य परमुत्कर्षः पुष्टिमार्गे कथमभवदिति संक्षेपतो विवेचितं. यथा देवालयस्य प्रचण्डभित्तिमण्डितस्यापि शिखरनिर्माणं विना न भवति सम्पूर्णता तथा पुष्टिमार्गस्वीकृतिं विना न भवति भक्तिमार्गस्य परिपूर्णता. नापि मानवजीवित-

साफल्यं. सर्वत्राऽस्ति व्यापकमेकं चैतन्यमिति ज्ञात्वैव ये कृतकृत्य-मात्मानं मन्यन्ते न ते वस्तुतः कृतकृत्या भवन्ति. किंतु तादृशं चैतन्यं तादृग्रूपेणोपास्य. तदिदं सर्वं पुष्टिमार्गे संभवतीति सर्वथाऽयं पुष्टिमार्गो भक्तिमार्गस्य सर्वस्वमित्यत्र न संशयः. बान्धवाः! अधुनाऽस्य मार्गस्य प्रवर्तकानां श्रीवल्लभाचार्याणां चरितं लिखितु-मारभामहे.





# २ कुलवृत्तम्

१ निवासस्थानपरिचयः.

२ प्रसिद्धपूर्वजानां संक्षेपतो वृत्तम्.

३ भगवदवतारयोग्यतानिवेदनम्.

( १ )

अस्ति सकलाचार्यजननपरिपूता विविधरामेश्वरप्रभृतितीर्थस्थानरमणीया, सकलभक्तहृदयकमलहारिभिः श्रीरामचन्द्रस्य पराक्रमकृत्यैरभिनंद्या अतिविशालदेवालयव्रातदर्शनीया, परमसुन्दरवनश्रीसनाथमलयगिरिप्रमुखगिरिवैरभासुरा, अत्युन्नतफलभराढ्यनारिकेलपूगवृक्षमण्डितैर्विकचकुसुमावृतलतासहस्रमनोहारिभिरुपवनसहस्रैर्विभूषिता, सकलभारतवर्षप्रसिद्धा दक्षिणा नाम दिक्. तत्र वेदाध्ययनतत्परैरग्निहोत्रपालकैर्मूर्तैस्तेजोराशिभिरिव विप्रवरैरधिष्ठिता, समीपतरवर्तिस्तंभादिपरिरक्षिता काकुम्भकरनाम्नी नगरी.

यत्र च सदाचारतत्परान्निवासिजनानवेक्ष्य सर्वेऽपि दक्षिणापथस्था जनाः परं विस्मितास्तां नगरीं साक्षात्तीर्थमेव मन्यन्ते. अधुनाऽपि बहवो जनाः श्रीवल्लभाचार्याणामलौकिकीं यशःसन्ततिमाकर्ण्य सानन्दास्तदीयं जन्मस्थानं दिदृक्षवो दक्षिणापथं गत्वा तां नगरीं साक्षात्कृत्यात्मानं परिपूतान् मन्यन्ते.

( २ )

तत्र बहोः कालात् स्वस्वविहितानि कर्माणि कुर्वाणाः, सततं परिचलितवेदघोषबधिरितसकलदशदिशः, प्रतिदिनहूयमानहविष्कलापगन्धिधूमधूसराग्निशालाः, प्रतिग्रहलाभसन्तुष्टा दिव्या इवालौकिकतेजस्विनो विप्रवंशा अवसन्. तेषु चास्ति सदैव पापरहितं परमपवित्रभगवद्भक्तनररत्नजन्मपरिपूतं महर्षिभरद्वाजमूलपुरुषं तैत्तिरीयशाखाध्यायि रेणुकाकुलदैवतं त्रिप्रवराणां विप्राणां कुलं. बान्धवाः ! इदमेव कुलं विविधपूज्यनरवरसुकर्मलब्धपुण्यराशि केवलं लोकानुग्रहायावतीर्णैः श्रीवल्लभाचार्यैः स्वप्रादुर्भावेन पवित्रीकृतमिति भवन्तो विदांकुर्वन्तु. अस्तु. तत्र कदाचित् सकलशुभलक्षणसमेतो बालो यज्ञनारायणदीक्षितो नाम प्रादुरासीत्. वाचकाः ! अयमेवास्य वंशस्य ललामभूतो मूलभूतः श्रीवल्लभाचार्यपितृचरणानां लक्ष्मणभट्टानां पितुःप्रपितामह इति जानीत. क्रमेण चायं वर्धमानोऽष्टमे वर्षे विधिवद्गुरुणोपनीतः सर्वान वेदांस्तथा सर्वाणि शास्त्राण्यधीत्य विद्यापारंगतो बभूव. तं च तरुणं सदाचारिणं वीक्ष्य कन्याजनका बहवस्तं स्वजामातरं विधातुं प्रायतन्त. वाचकाः ! इह जगतीतले बहवो जना एवं मन्यन्ते यत्सर्वमपि दृष्टोपायैरेव संभवति न तत्रास्ति अदृष्टस्य कारणतेति. परंतु अयं तेषां भ्रमः. सर्वमपि कार्यमदृष्टानुबन्धि केवलं दृष्टं निमित्तमेवापेक्षते. अस्तु. सोऽपि विधिवत् स्नातो गुरोरनुज्ञया स्वगृहमागतः कस्यचित् कुलीनस्य विप्रवरस्य नर्मदानाम्नीं सुलक्षणां कन्यां पर्यणयत्. तया भार्यया समं गृहस्थाश्रमोचितान् सर्वानपि विधीन् कुर्वाणः प्रतिदिनमग्निहोत्रमुपासमानः परमानन्देन कालमयापयत्.

अत्रान्तरे कदाचित् परमभागवतोऽनिशं श्रीकृष्णध्यानपरो द्रविडदेशीयो विष्णुमुनिसंज्ञको विप्रश्रेष्ठस्तस्य यज्ञनारायणस्य गृहमतिथिर्भूत्वा समाजगाम. सोऽपि आतिथेयस्तादृशं भक्तवरं सकलकल्याणदक्षमतिथिविशेषं स्वगृहमागतमवलोक्य संतुष्टः सविशेषं पूजयामास. तस्य स्वस्मिन् श्रद्धामवलोक्य प्रीतः स विष्णुमुनिरपि सर्वं तदीयं सत्कारं स्वीचक्रे. ततश्च मध्याह्ने विधिवत् सूर्यमुपास्य भुक्त्वा तूष्णींस्थितं तं मुनिवरमवलोक्य स यज्ञनारायणस्तदीयां दिव्यां शान्तिं तथा दुर्दर्शं तेजोमण्डलं वीक्ष्य विस्मितः सविनयं समीपमागत्य विज्ञापयामास. विप्रवर ! अहमस्मि गृहस्थाश्रमी ईश्वरानुग्रहादतिथिसत्कारसामर्थ्यशाली. तेन प्रतिदिनं बहवोऽतिथयोऽत्र समायान्ति. तेषु केचन वेदपारगाः केचन शास्त्रनिष्णाताः अन्ये च साधारणप्रज्ञाः परे चातिविरला अगणितयागकारिणोऽपि, परंतु त्वत्सदृशस्तु तेजस्वी अतिथिर्न पुरा मया दृष्टः. अलौकिकं हि तेजः केवलं तपस्यया लभ्यत इति शृणोमि. तद्भवता कीदृशं तपश्चरितं येनेदृशी शान्तिस्त्वया समासादिता समं दिव्येन तेजसेति ज्ञातुमिच्छामि. यदि न किमपि महागूढं तदा वक्तुमर्हसि येनाहमपि यथाशक्ति तत्संपादनार्थं प्रयतिष्य इति.

स तु परमकृपालुर्विष्णुमुनिस्तस्य यज्ञनारायणस्य योग्यतां जानन् परमामोदेन प्रत्युवाच—वत्स ! यज्ञनारायण ! त्वमसि सत्कुलीनः सदाचाररतश्च. तेन संतुष्टोऽहं वच्मि. यद्यपि सन्ति अश्वमेधादीनि अनेकानि श्रौतानि कर्माणि तथापि सर्वाणि तानि श्रीकृष्णोपासनाया लेशतोऽपि योग्यतां न स्पृशन्ति. अहं च चिरादपि श्रौतानि कर्माण्यनुष्ठीय शान्तिमलभमानः केनापि सद्गुरुणा

श्रीकृष्णभक्तिमुपदिष्टोऽनयैवेदृशीं शान्तिमलभे. अधुना तु भगवतः प्रसादान्निरस्तसकलदुःख आत्मानमतिसुखसागरमग्नं विभावयामि. नेदृशी शान्तिर्यागशतैर्वा ब्रह्मज्ञानेन लभ्येत्यहं मन्ये. तद्यदि त्वमिमां शान्तिमिच्छसि तदा त्वमपि गोपालसेवको भव. अहं त्वां सर्वं तद्ध्यानादिकमुपदेक्ष्यामीति.

स तु यज्ञनारायणस्तस्येदं वाक्यामृतं निशम्य संतुष्टस्ततः सर्वं गोपालोपासनां तथा रहस्यमन्त्रं च लब्ध्वा धन्यः प्रतिदिनं गोपालमुपास्त. सोऽपि यथायथोपासनामारभत तथातथा परां शान्तिं संतोषमलभत. एवं गच्छति काले स यज्ञनारायणदीक्षितः स्वयं कृतकृत्योऽपि केवलं देवसंतोषार्थं सोमयागान्विधातुमारभत. स च सततं गोपालध्याननिमग्नः सर्वत्र श्रीकृष्णचन्द्रमेव वैश्वानर आहुतिप्रक्षेपकालेऽपि ध्यायन् हविरुत्ससर्ज. एवंरीत्यैकत्रिंशद्यागेषु निवृत्तेषु त्रैलोक्यपालकः स कंसारिर्वेदिमध्यगतवह्निज्वालामध्ये प्रकटीभूयात्मानं दर्शयामास.

महाभागो यज्ञनारायणदीक्षितोऽनेकजन्मसुकृतैकदर्शनीयं तं त्रैलोक्यनाथं वह्निमध्ये प्रकटीभूतं समवलोक्य प्रमोदातिरेकप्रफुल्लवदनकमलो नयनकमलाभ्यामानन्दाश्रुजलसंततिं परित्यजन् कथमपि उत्थाय साष्टाङ्गं प्रणिपत्य भक्तिरसातिरेकेण सगद्गदमिदमुवाच— नाथ ! त्रैलोक्यपते ! अद्य खलु तवानेनालौकिकेनानेकजननसंचितसुकृतसाध्येन जन्मबन्धच्छिदा दर्शनेन सर्वथा पवित्रीकृतोऽस्मि. नाहं केवलं पावितः किंतु मदीयं कुलमपि पवित्रीकृतं. भगवन् ! सर्वेऽपि अमी विषया वा तदिच्छा वा तावदेव तिष्ठन्ति यावत्त्वं सकलानन्दकन्दश्चक्षुर्विषयो न भवसि. नाथ ! सत्यमेव

त्वं भक्तवत्सलः यतः क्षुद्रमपि मामुद्धर्तुमिच्छयाऽत्र प्रकटीभूतोऽसीति.

तं तथा प्रणिगदन्तं मूर्तं भक्तिरसमिव समीक्ष्य संतुष्टो दीनवत्सलः श्रीवैकुण्ठाधिपः प्रत्याह—वत्स ! यज्ञनारायण ! संतुष्टोऽस्मि तव भक्तिविशेषेण. तदधुना वरं ब्रूहि इति. स तु भगवत्साक्षात्कारेण विनष्टेच्छो वरवरणार्थं साक्षाद्भगवता समादिष्टोऽपि आज्ञातिक्रमभिया तूष्णीं तस्थौ. ततश्च तं तूष्णींस्थितं यज्ञनारायणमालोक्य स्मितमधुरवदनकमलः स्वयमाह—वत्स ! यज्ञनारायण ! त्वं हि निरिच्छः संवृत्तस्तथापि त्वामहं वदामि 'यदा त्वदीया वंशजा एकोत्तरशतसोमयागान् करिष्यन्ति तदा पुष्टिमार्गस्य सकललोकोद्धारसमर्थस्य प्रसारार्थमहं त्वदीये वंशे स्वयमात्मानमुत्पादयिष्यामीति.' उक्त्वा चेत्थं तिरोहिते भगवति लक्ष्मीनाथे स यज्ञनारायणदीक्षितो भगवतो वरवाक्यानि स्मारं स्मारं परममोदत. वाचकाः ! को हि न मोदेतानेन वरश्रवणेन. क्षणिकां कपर्दिकामपि लब्ध्वा यदि वयं परं हृष्यामस्तदा स्वयं लक्ष्मीनाथः स्वकुले प्रादुर्भविष्यतीति श्रुत्वा कस्य वा मोदो न भवेत् ! अस्तु.

एवंगच्छति काले स महाभागो यज्ञनारायणदीक्षित उचिते काले वैकुण्ठं जगाम. पितृवियोगव्याकुलचेतास्तदीयः पुत्रो गङ्गाधरसोमयाजी विवेकावधूतशोकावेगः कर्तव्यतत्परो बभूव. सोऽपि विधिवदधीत्य योग्ये वयसि कांचीं नाम कन्यां परिणिनाय. सापि सती तं परिचरणादिना सेवमाना संसारचिन्तारहितं स्वपतिं व्यधात्. महाभागो गङ्गाधरसोमयाज्यपि स्वपितुः प्रतिज्ञां पूरयितुं सप्तविंशतिसंख्याकान् सोमयागानकरोत्. तथा परमपाण्डित्यप्रकाशकान्

नूतनान् ग्रन्थानपि विरचयामास. गोपालोपासनां तु पितुरप्याधिक्येन चक्रे. एवं संसारयात्रां सुखेन समापयित्वा सोऽपि वैकुण्ठं ययौ. ततस्तदीयः पुत्रो गणपतिभट्टसोमयाजी सर्वकल्याणगुणशाली वेदशास्त्रपारङ्गतो गृहस्थाश्रमं स्वीकृत्य द्वात्रिंशत्संख्याकान सोमयागानकरोत्. तस्मिन्नपि पुण्यलोकं गते सति तदीयः पुत्रो वल्लभभट्टसोमयाजी सदैव कृष्णचरणौ भजमानः प्रतिदिनमज्ञानध्वान्तनिराकरणाय नानाग्रन्थान्विरच्य पञ्चसोमयागांश्चक्रे.

( ३ )

बान्धवाः ! अस्मिन्हि कुले श्रीमदाचार्यप्रभुचरणरूपेण पुष्टिमार्गस्य प्रसारार्थं साक्षाद्भगवानवततारेति अग्रे वृत्तं निरूपयितुमिष्टं. तत्र प्रथमं कीदृशं हि कुलस्यास्य भाग्यं सदाचारशालित्वमिति संक्षेपतो निरूप्यते. येन तदन्यत्रापि निदर्शनं भवेत्.

बान्धवाः ! यद्यपि वेदशास्त्रादिभिः कथिता बहवः सन्ति सदाचारास्तथापि भगवद्भक्तिसदृशः सदाचारो नास्ति. यस्मिन् कुले यस्मिन् गृहे वा परमात्मभक्तिर्जागर्ति तत्र कथं खलु अन्ये पापमूलका दोषाः संभवेयुः ! दोषा हि तत्र संभवन्ति यत्र परमात्मभक्तिविहीनानां चक्षुरादितर्पणलोलुपानामज्ञानमलिनानां नरकीटानां यथेच्छाचाराः प्रभवन्ति. अत्यन्तं पापमलिनचेता नूतनस्य पापाचारस्य काले यदि परमात्मानं सन्तं भावयेत्तदा स तत् पापं कर्म कर्तुं न शक्नोति. तदा किमु वक्तव्यं यो हि सततं परमात्मचरणयोर्लीनो यश्च पापलेशेनापि विहीनः स पापं न कुर्यादिति. वाचकाः ! यथा कुलपावित्र्ये पुरुषाः कारणं तथा स्त्रियोऽपि. परंतु

स्त्रीणां साधुत्वे पुरुषा एव कारणमिति नैव विस्मर्तव्यं. आचार्यचरणानां कुले संजाताः पूर्वजाः कथं सदाचारा आसन्निति संक्षेपेण पूर्वं निर्दिष्टमेव. तेन तत्रस्थो ललनासमूहः परमपवित्र इति न संशयलेशोऽपि. यद्यप्याचार्यचरणानां कुले शतं सोमयागा अभवन्. प्रायः सर्वेऽपि तदीयाः पूर्वजाः शास्त्राभ्यासकुशला आसंस्तथापि आचार्यचरणानामवतारे तदीयपूर्वजानां निरतिशयं गोपालभक्तिरेव कारणमिति मन्ये. उचितमपीदं. भगवान् यथा स्वोपासके प्रीतिं करोति स तथा नान्योपासक इति स्पष्टतरं लोके. तस्मादाचार्यचरणानामस्मिन् कुले प्रादुर्भवस्य कारणं तदीया सर्वोत्तमा गोपालभक्तिरेवेति सत्यं. प्रकृतमनुसरामः.





# ३ पितृचरितम्

१ गृहस्थाश्रमप्रवेशः

२ पितुःप्रपितामहसंकल्पपूरणं

३ भगवद्वरसाफल्यादर्शनादुद्वेगः

४ तीर्थयात्रार्थं प्रयाणम्.

( १ )

एवंरीत्याऽचार्यचरणानां पितामहे वल्लभभट्टसोमयाजिनि संसारयात्रां कुर्वति सति भगवत्कृपया तस्य लक्ष्मणभट्टो नाम नरवरः पुत्रः समभवत्. वल्लभभट्टोऽपि चिरं सुतस्यालाभेन खिन्न इव भासमानः श्रीगोपालकृपया संजातं तं पुत्रं सम्यग्वर्धयामास. वालो लक्ष्मणभट्टोऽपि सदा सस्मितवदनकमलस्तेजस्वी शीघ्रमेव पर्यटन् सर्वं गृहमाकुलं चक्रे. वल्लभभट्टः परमपण्डितः स्वपुत्रमष्टवर्षमवलोक्योपनीय विद्याग्रहणार्थं गुरुगृहं प्रेषयामास. सोऽपि साक्षादाचार्यचरणानां पिताऽलौकिकवुद्धिवैभवशाली यथानियमं गुरुगृहं गत्वा सर्वमपि विद्यानिधिं स्वाधीनमकरोत्. गुरुरपि तादृशविशेपशालिनः शिष्यस्य लाभेनात्मानं धन्यंमन्यः स्वजन्म सफलममन्यत.

अथ कृतविद्यं स्वपुत्रमवगम्य प्रमुदितः स वल्लभभट्टः सोमयाजी

गुरुगृहं गत्वा तं स्वपुत्रं लक्ष्मणभट्टं स्वगृहं प्रेषयितुं विज्ञापयामास. गुरुरपि तदीयसेवया तथा विद्याभ्यासेन पूर्वमेव सन्तुष्टो महता मोदेन तं स्नातकं विधाय स्वगृहं गन्तुमवदत्. गुरुणा स्वयमनुमोदितोऽपि पित्रा च समाज्ञप्तोऽपि स लक्ष्मणभट्टो निसर्गत एव विरक्तो विद्याधिगमेन संजातवैराग्यातिशयो गृहस्थाश्रमं स्वीकर्तुं नैच्छत्. तथा गुरवे निवेदयामास च. परन्तु तं गुरुः 'वत्स ! लक्ष्मणभट्ट ! अहमपि जानामि मानवस्य न प्रधानं कर्म गृहस्थाश्रमस्वीकारः. तथापि तव गृहस्थाश्रमस्वीकारो नान्यस्येव विषयोपभोगाय किंतु सकलजगदुद्धाराय भविष्यति. पुरा खलु तव पितुः प्रपितामहः परमधार्मिको रात्रिंदिवं गोपालदेवतामुपासमानो यदा सोमयागमारभत तदा तदीयभक्तिविशेषेण सन्तुष्टो नारायणः स्वयं प्रादुर्भूयावदत् यदा च शतं सोमयागास्तव वंशजाः करिष्यन्ति तदाऽहमस्य लोकस्योद्धाराय त्वदीये कुले प्रादुर्भविष्यामीति. तत्र केवलं शतसंख्यापूर्तये भवताऽवश्यं गृहस्थाश्रमः सेवनीय एव. यद्यपि नास्ति तव गृहस्थाश्रमप्रवेशेच्छा, नापि तेन तव सुखं प्रत्युत क्लेशाधिक्यमेव तथापि मतिमता नरेणासंख्यजनोपकारार्थं स्वदुःखान्यगणनीयान्येव. यो हि मानवः स्वीयं स्वल्पमपि दुःखमसहमानः परेषां दुःखसागरे निश्चिन्तस्तिष्ठति तं विद्वांसो मानवं न मन्यन्ते. तद्गच्छ. कुरु गृहस्थाश्रमं प्रविश्य सोमयागशतत्वपूर्तिं. संपादय च यावच्चन्द्रदिवाकरस्थायिनीं भगवदवतारजनकत्वकीर्तिमिति मुसपदिदेश.

श्रुत्वा चेमां गुरुवाणीं शान्तचेताः स लक्ष्मणभट्टः पित्रा समं गृहमागतः शीघ्रमेव विद्यानगरवास्तव्यस्य राजपुरोधसः सुशर्मणः 'यल्लमाइल्लमा'ख्ये लक्ष्मीसरस्वत्याविव सुतनये परिणयति स्म. ते अपि

अभिजातजातत्वेन कल्याणगुणशालिन्यौ स्वपतिं स्ववर्तनेन परमसेवेताम्.

( २ )

महाभागः सकलवेदशास्त्रपारंगतः श्रीलक्ष्मणभट्ट एवंरीत्या गृहस्थाश्रमं स्वीकृत्येतरजनवद्विषयभोगेऽनासक्तः स्वकर्तव्यं विचारयामास. स च प्रथममग्निमाधाय श्रौतेन विधिनाऽवशिष्टान् सोमयागान्विधातुं प्रारभत. तस्य पूर्वजानां प्रतापेन समाकृष्टा विद्वांसो जनास्तथा धनिकास्तं परमसाहाय्ययन. क्रमेण च यागान् कृत्वा स शतसंख्यामपूरयत्. यदा च चरमः सोमयागः प्रस्तुतस्तदा तादृशं भगवता प्रदत्तं वरं कर्णोपकर्णिकया श्रुत्वा बद्धकुतूहला दक्षिणापथवासिनो जनास्तदावाससमाजग्मुः. यदा च चरमं सोमयागं समापयित्वा विधिवदवभृथस्नानार्थं स परमपवित्रशीलो लक्ष्मणभट्टो नदीतीरमगात्तदा ते सर्वेऽपि जनास्तच्छरीरसंपर्कपवित्रीभूतास्वप्सु निमज्जनेनात्मानं पावयितुमिच्छवो नदीतीरमागच्छन. अचिरादेव स लक्ष्मणभट्टः स्वभार्याभ्यां सह समं च संबन्धिजनेन सोत्सवं नदीजले स्नात्वा तां नदीं पावयामास. तस्मिन्नेव क्षणे नूतनमेघपटलगंभीरनिनदा सकलश्रोतृश्रोत्रकमलमध्यसंचारिणी काचनाशरीरिणी वाणी वत्स ! लक्ष्मणभट्ट ! सत्यमेव त्वया स्वपितुःप्रपितामहस्य संकल्पः पूरितः. सन्तुष्टोऽस्मि तवानेन यागसंकल्पपूरणेन. अहमपि त्वत्पूर्वजाय प्रदत्तं वरं सफलयितुं मम भक्तकल्याणविधानाय तवोदरादचिरादेव प्रादुर्भविष्यामि इति जगाद.

निशम्य दिव्यां तां वाणीं मिलितः सर्वोऽपि जनसमुदायो

विस्मयसागरे न्यमज्जत्. महात्मा लक्ष्मणभट्टस्तु भगवदनुग्रहं प्रत्यक्षीकर्तुं पर्युत्सुको बभूव.

( ३ )

अथ गच्छति काले तस्य लक्ष्मणभट्टस्यैकः पुत्रो रामकृष्णो नाम तथा सुभद्रासरस्वत्याख्ये द्वे कन्यके इति अपत्यत्रयमभवत्. सोऽपि स्वाभिजनं परकीयैर्भूपालैराक्रान्तमवलोक्य काकरेनाम्नि नगरेऽवसत्. यथा यथा भगवदवतारदर्शनपर्युत्सुकः स लक्ष्मणभट्टो बभूव यथा यथा च भगवदवतारस्य स चिह्नं नापश्यत्तथा तथा परं खिन्नः प्रतिदिनमात्मानं पापिनममन्यत. स हि मेने साक्षाद्भगवता स्वयमाविर्भूय मदीयपितुःप्रपितामहायोक्त एव अर्थः. मयाऽपि अवभृथस्नानान्ते दिव्या तदीयैव वाणी श्रुता, तथापि भगवतोऽवतारस्याद्यापि चिह्नं न विभावयामि. सकलत्रैलोक्यनाथो मिथ्यावदेदिति कल्पयितुमप्यशक्यं. तस्मान्ममैव जन्मान्तरसंचितेन वाऽस्मिन जन्मनि संभूतेन वा दुरितसंघेन प्रतिबद्धः खलु भगवदवतारः. यद्यपि अहमात्मानं सोमयाजिनं परमपवित्रं भावयामि तथापि स किल महान् मे दुरितसंचयः. जना हि यत्किंचिदपि विहितं कर्म कृत्वाऽत्मानं पुण्यशालिनं मन्यन्ते परन्तु न जानन्ति अनेकजन्मसंचितं दुरितराशिं. तदधुना क उपायो दुरितक्षयस्येति.

एवं भूयोभूयो विचिन्त्य स लक्ष्मणभट्टोऽन्यमुपायमपश्यन् वंशपरंपरया समागतां गोपालोपासनामेव प्रारभत. तस्य सर्वोऽपि कालः सततं श्रीगोपालध्यानमग्नस्य निमिष इवागच्छत्. यथायथा तदीयोपासनासक्तिरवर्धत तथातथा भगवदवतारदर्शनौत्सुक्यमपि. तं च सततं श्रीगोपालोपासनासक्तमवलोक्य तदीया पत्नी आचार्य-

चरणानां माताऽपि कृष्णभक्तिमारभत. बान्धवाः ! एवंरीत्या तौ दम्पती भगवदवतारदर्शनार्थं तीव्रं तपः समाचेरतुः.

( ४ )

एवंवृत्तेषु केषुचिन्मासेषु तस्य लक्ष्मणभट्टस्य भगवदवतारदर्शनोत्कंठामवलोक्य सन्तुष्टः सकलभक्तकल्याणदक्षः श्रीगोकुलनाथः स्वप्ने आत्मानं दर्शयामास. जगाद च—वत्स ! लक्ष्मणभट्ट ! प्रीतोऽस्मि त्वदीयं भक्त्यतिरेकं वीक्ष्य. तव तथा त्वदीयपूर्वजानां भक्तिविशेषेणावर्जितः सत्यमेवावतर्तुमिच्छामि. परन्तु मम संकल्पं चंपारण्येऽहं पूरयितुमिच्छामि. तत्त्वं स्वपत्न्या समं तीर्थयात्राविधाय शीघ्रमेव निर्गच्छेति.

स भगवद्भक्तो लक्ष्मणभट्टस्तमिमं श्रीगोपालदेवस्यादेशं शिरसा स्वीकृत्य तीर्थदर्शनेनावशिष्टं मे पातकं नश्येदिति मन्वानः सर्वमेव कुटुंबं स्वभ्रातरि जनार्दनभट्टे निक्षिप्य वंध्याकल्पां भगवदाराधनतत्परामिल्लमां स्वपत्नीं गृहीत्वा तीर्थयात्रानिर्गमनार्थं निरणयत्. अत्रान्तरे तत्रस्थ एव कश्चिच्छंकरदीक्षितो नाम विप्रवर्यः कृतकृत्यः सकलं संसारभारं योग्ये स्वतनये निवेश्य चरमवयोयोग्यां तीर्थयात्रां विधातुकामस्तत्रैव समाजगाम. विज्ञापयामास स्वेन समं त्रिस्थलीयात्राविधानायागन्तुं. लक्ष्मणभट्टस्तु प्रथमत एवोत्सुकस्तादृशं सुहृद्वरं पथि सहायं लब्ध्वा निश्चिन्तः शीघ्रमेव यात्राविधानार्थं प्रातिष्ठत. अथ कतिपयदिवसैः क्रमेणावन्तीद्वारकादितीर्थानि पर्यटन् प्रयागक्षेत्रमाजगाम. तत्र च स्वकीयोपाध्यायगृहेऽवतीर्णः स भक्तिमान् लक्ष्मणभट्टः संसारदुःखदग्धहृदयो भगवदवतारदर्शनोत्कण्ठया रात्रिंदिवं पीड्यमानः सकलसंतापशमनवित्तां भगवतीं गंगां गत्वा

तस्या विमले जले आत्मानं न्यक्षिपत्. तस्या जलस्पर्शेनापनीतकायचित्तक्लेशः प्रमुदितमानसः सर्वमपि भगवदुपासनादिकं विधाय प्रामोदत.

अथोपाध्यायस्यानुमत्या सर्वमपि तीर्थविध्यादिकं विधाय कृतकृत्यः कतिपयदिनानि तत्रोषित्वा श्रीविश्वेश्वरराजधानीं गंगया सखीस्नेहेनेव समाश्लिष्टां वाराणसीमाययौ. तत्र च हनूमद्घट्टेऽन्यान् शंकरदीक्षितस्य जनान्निवासयित्वा स्वयं परमश्रद्धालोः श्रेष्ठिनः कृष्णदासस्य विज्ञप्त्या तदीयं गृहं गत्वा तस्थौ. अयं च श्रेष्ठी पुरत एव द्रविडदेशादागतेभ्यः प्रवासिभिः श्रुतलक्ष्मणभट्टकीर्तिस्तं यात्रार्थं समागच्छन्तमाकर्ण्य संजातानन्दस्तं लक्ष्मणभट्टं स्वगृहमानेतुं सेवकजनेन समं प्रयागक्षेत्रमागत्यातिष्ठत्. तेन लक्ष्मणभट्टेन समं च काशीं समाययौ.

श्रेष्ठी कृष्णदासस्तं महाभागं लक्ष्मणभट्टं तथा तदीयां साध्वीं पत्नीं 'इल्लमां' च स्वभवनागतौ वीक्ष्य सन्तोषभरभुग्नस्तथाऽसेवत यथा स्वयं भगवदवतारदर्शनपर्युत्सुकोऽपि क्षणमात्रं विस्मृतस्वदुःखस्तं श्रेष्ठिनं वरवरणार्थमब्रवीत्. वाचकाः ! पश्यत सेवायाः सामर्थ्यं. स्वयं पर्युत्सुकोऽपि लक्ष्मणभट्टः परस्य दुःखमपहर्तुं प्रायतत. अस्तु. तेन श्रेष्ठिना पुत्रार्थं विज्ञप्तः स लक्ष्मणभट्टः सत्यवाक् तथास्तु इत्युक्त्वा तमन्वगृह्णात्. सोऽपि तावतैव कृतकृत्योऽभूत्.






१ देशपरिस्थितिः.

२ धर्मग्लानिः

३ चंपारण्ये प्रादुर्भावः

४ भगवदवतारचिह्नानि.

( १ )

बान्धवाः ! इदानीमाचार्यचरणानां प्रादुर्भावो वक्तव्यः परन्तु तस्यादौ देशपरिस्थितिरवश्यं निरूपणीया. येन कदा वा भगवान् भक्तगणत्राणायावतरतीति सम्यग्ज्ञातं स्यात्. यद्यपि भगवान् गीतायां "यदा यदा हि धर्मस्य ग्लानिर्भवति भारत" इति धर्मग्लानिमेवात्मनोऽवतारकारणं वदति तथापि धर्मग्लानिर्धर्मोत्कर्षश्च देशपरिस्थितिमूलकावेवेति मे मतं. यदा हि देशपरिस्थितिः समीचीनाऽनुकूला भवति तदा धर्मवृद्धिर्भवति परन्तु यदा तु देशपरिस्थितिर्दौर्भिक्ष्याक्रान्तसकलजनपदा कष्टप्रदा भवति तदा तु अवश्यमेव धर्मग्लानिर्भवति. तस्मादाचार्यचरणानामवतारसमये प्रथमतो देशपरिस्थितिः कथमासीदिति निरूपणीयमेव.

वाचकाः ! यदाप्रभृति उत्तरध्रुवनिवासिन आर्या इमां भारतभुवमात्मसात्कृत्वाऽत्रैव न्यवसंस्तत आरभ्येयं मातृभूमिस्तद्वंशसंभवै-

बेलाढ्यैः क्षत्रियैर्भूपालैर्यथान्यायं प्रशासिता स्वर्गादपि हृदयहारिण्यभवत्. न केवलमत्रत्या एव जना एवमवदन्किंतु परकीया अपि जनास्तथा जगदुः. अधुनाऽपि गदन्ति. सर्वेऽपि चत्वारो वर्णाः परस्परं प्रीत्या वर्तमानाः स्वस्वकार्याणि कुर्वाणा लोकोत्तरं सौख्यं प्रापुः. इयमेवार्यभूः सकलजनैः कुबेरनगरीत्वेन व्यपादिश्यत. अस्तु.

एवं प्रयाते बहुकाले सर्वमपि दक्षिणापथं समाक्रम्य क्षत्रियवंशसंभवेषु भूपालेषु संपूर्णं भारतवर्षं शासत्सु अस्माकं दुर्दैवेन वाऽपारैश्वर्यसम्पन्नास्ते परस्परमकलहायन्त. सकलसौभाग्यकारणं परस्परैक्यं विस्मृत्य परस्परनाशाय प्रायतन्त. विद्याशीला ब्राह्मणा बोधेनैश्वर्यमत्तानां क्षत्रियराजानामिमं द्वेषं शमयितुं न प्रयेतिरे. वैश्याश्च स्वव्यापारदक्षा अत्यन्तमौदासीन्येनावर्तन्त. सेवापरः शूद्रवर्गः किमपि अनिष्टमभावयंस्तूष्णीमतिष्ठत्.

इमां भारतवर्षस्य परिस्थितिमवलोक्य परकीया यवनादयः प्रथममेव भारतवर्षसंपल्लोभाकुला अपि तादृशेन क्षत्रियाणां दुष्प्रधर्षेण तेजसा निरुद्धप्रवृत्तयः क्रमेण भारतभुवमात्मवशां कर्तुमारभन्त. वाचकाः! उत्तरार्यावर्तस्य परस्ताद्वर्तमानैः क्रूरैर्मानवैर्भूयोभूयोऽपारसैन्यसमन्वितैराक्रम्य निर्लुण्ठितेयं भारतभूः केवलमस्थिमात्रावशेषायाः कामधेन्वाः सादृश्यमवहत्. ते ते क्षत्रियभूपालाः प्रथममन्यस्य क्षत्रियराजस्याक्रमणे आत्मनोऽनिष्टममन्यमाना अत्युदासत, परन्तु यथायथा भिन्ना भिन्ना यवनसंघास्तान् क्षत्रियभूपालान्निहत्य तदीयानि राज्यानि स्वायत्तानि चक्रुस्तथा तथा लब्धप्रबोधा अवशिष्टा राजानस्तैः समं योद्धुं समनह्यन् परन्तु प्रवृद्धबलान् यवनान् जेतुं ते न प्राभवन्. गिझनीपतिर्महंमदस्तु इमां भारतभुवं

सप्तदशकृत्वो लुलुण्ठ. स च प्रतिलुण्ठनेऽगणितान जनान्निहत्यानेकान् देवालयान् भूमिसात्कृत्वा बहून् सनातनधर्मानुयायिनो लोकान् महंमदीयधर्मानुयायिनो विधाय स्वराजधानीं प्रति ययौ. तथैव शहाबुद्दीनप्रभृतयोऽपि यवनराजाः.

वाचकाः ! बलाढ्येषु अपारशौर्याकरेषु तेषु तेषु क्षत्रियवीरेषु भारतं शासत्सु सत्सु कथं यवनास्तान् पराजयन्तेति विचित्रमिव भाति. तथापीतिहासविदामत्र नाश्चर्यं भवति. यतो बलाढ्या अपि क्षत्रियराजाः परस्परबलवर्धकेनैक्यगुणेन रहिता महान्तः कार्पासपुंजा इव स्वल्पेन वातेनेव यवनसंघेनाक्रम्य पराजिता इति ते सम्यग्जानन्ति. सर्वोत्कर्षस्य कारणं हि परस्परैक्यं. तच्च यत्र न विद्यते विद्यमानमपि यत्रस्थं नाशोन्मुखं, स मानवसमाजो बलाढ्योऽपि संसारसौख्यगिरिशिखरमारूढोऽपि क्षणादेवाधोगतिं गच्छतीति सर्वेषामैकमत्यं. अस्तु.

एवं क्षत्रियभूपालान्विजित्य लब्धविजयास्ते यवनाः प्रथममुत्तरार्यावर्तं स्वाधीनं विधाय ततः क्रमेणाग्रे स्वपादान् प्रसारयन्तः सर्वमपि आर्यावर्तमात्मसाचक्रुः. तेनावशिष्टाः क्षत्रियवंशजा आर्यावर्ते स्थानमलब्ध्वा दक्षिणापथस्थानि राज्यानि आत्मसात्कृत्वा कथमपि अजीवन्. अथाचिरादेव जलालउद्दीनखिलजीनाम्नो दिल्लीश्वरस्य भ्रातुष्पुत्रो अल्लाउद्दीनः साहसिकः सर्वमपि दक्षिणापथमात्मसात्कृत्वा तत्रस्थानि राज्यानि नाशयित्वा सर्वमपि तं देशं जर्जरितमकरोत्.

बान्धवाः ! इत्थं बलिष्ठैर्यवनैराक्रान्तोऽयं देशो दीनोऽभवत्. निसर्गत एव शान्तिप्रिया निवासिजनास्तांस्तान्क्रौर्येण यमराजमपि

तिरस्कुर्वतो यवनानवेक्ष्य भीताः परमात्मानं स्वरक्षणार्थं प्रार्थयामासुः. ततश्च ते यवना अपि नूतनैस्तदीयैरेव बान्धवैराक्रान्ताः सर्वमपि भारतवर्षं सकलयातनागारं चक्रुः. यदाचाचार्यचरणाः प्रादुर्बभूवुस्तदा दिल्लीश्वरा मोंगलवंशजा एवासन्. अस्तु.

( २ )

एवंरीत्या सकलेऽपि भारतवर्षे पारतंत्र्यमग्ने सति स्वातंत्र्यमूलको धर्मकल्पवृक्षोऽपि परां दुर्दशां प्राप. सर्वत्र हि धर्मस्य रक्षणं राजसत्तया क्रियते. यथा हि परममूल्यस्याऽपि आम्रवृक्षस्य रक्षकाः कंटकसंघा एव. तैर्विना स आम्रवृक्षो जीवितुमपि न शक्नोति जीवन्नपि मृत इव भासते तथैव धर्मकल्पवृक्षोऽपि. विशेषतश्च सनातनधर्मः. यथाहि महावने स्वादुफलाः स्वरक्षणार्थं कंटकसन्नद्धा वृक्षविशेषाः सन्ति तथैवेह जगतीतलेऽन्ये धर्माः स्वसंरक्षार्थं परनाशमुपदिशन्तो वर्तन्त एव, परन्तु अयं सनातनधर्मः खलु केवलमाम्रवृक्ष इव शत्रुमित्रयोः समः सदैव परोपकारपरः सर्वेषां कल्याणविधाने दक्ष एव. तेनापगतेषु तद्रक्षकेषु स निरतिशयां दुर्दशां प्राप. यदा च तदनुयायिन एव क्षत्रियराजास्तद्रक्षका आसंस्तदाऽयमेव धर्मः प्रफुल्लः पारिजात इव सर्वेषां हृदयानि जहार. परन्तु विपरीते समये विपन्नो दीनो जीवितुमप्यक्षमः कथंचित्कचिन्निभृतमुवास.

बान्धवाः! सनातनधर्मो हि प्रथमत आरभ्य परपीडायामनुत्सुको मानवशीलोन्नतिमुपदिशन् स्वरक्षणे नात्यन्तं चिन्तामुवाह. यथा यथा चात्र भारतवर्षे कृतवसतयस्त एवार्यवंशजा विद्याविलासशीलाः परमात्मचिन्तामकुर्वंस्तथा तथा परपीडाविधानं तेषामशक्यमेवाभवत्. तेन ते तथैव स्वानुयायिभ्य उपादिशन्. तत एव कारणात् प्रायः सर्व एव

सनानतधर्मानुयायिनः परपीडां पापं मन्यन्ते. यद्यपि केचिदाधुनिकाः परकीयैः कृतां स्वोन्नतिं वीक्ष्य तथाऽस्मदीयां चावनतिं समीक्ष्य खिन्नाः स्वावनतिकारणं परपीडात्यागं प्रदर्शयन्ति. वदन्ति चास्मत्पूर्वजैः परपीडादानं पापत्वेन स्वीकृतं तेन वयं दीना ईदृशीं स्थितिं प्राप्ता इति. परन्तु न ते पश्यन्ति सकलभूमण्डलप्रसृतां धर्मस्य कीर्तिं. धर्मो हि नाम न राजनीतिविभागः येन तत्र कपटस्य वा छलस्य वाऽवकाशः. यत्र हि प्रेमसंलापो निःशंकं भवति यत्र च परस्परं बन्धुभावेन जनाः साहाय्ययन्ति, स एव धर्मः. सभ्याः! यदीदं धर्मस्य लक्षणं समीचीनं तदा कथयताऽस्मिन्विषये को वा सनातनधर्मेण तुल्योऽन्यो धर्म इह जगतीतले ? अस्तु.

स्वदेशं प्रबलहिमानीव्याप्तं त्यक्त्वा भारतविजयाय यदा निर्गता यवना उत्तरार्यावर्तमाक्रम्य स्वाधीनं चक्रुस्तदा सनातनधर्मानुयायिनां देवालयान् ते भूमिसाच्चक्रुः. बान्धवाः! सत्यपि आचारभेदे जगतः स्रष्टैक इति तु साधारणं, तस्यानुग्रहार्थं तत्प्रतिमाः परिपूजयन्ति भारतीयाः. परन्तु महंमदीयास्तदपि असहमानाः सहसा तानि अनाशयन. न केवलमेतावदेव किंतु ये खलु ब्राह्मणा वेदपारगा धर्मस्य मूलं तान् हत्वा भीत्या च स्वमतानुयायिनो वा यमालयातिथीन् वा चक्रुः. एवंरीत्या सर्वत्र व्याकुलीभावे सनातनधर्मो महान् सुदृढमूलोऽपि प्रबलवात्याक्रान्त इवाकम्पत.

क्रूरा महंमदीयाः शमप्रधानानत्रत्यान् जनान्विजित्य तदीयं धर्मं पीडयितुं तथाऽचेष्टन्त यथा तद्वर्णयितुं कोऽपि न शक्नोति. सज्जनाः! तांस्तान् भारतवर्षस्य विभागानाक्रम्य द्रव्यं तैः संपादितं परन्तु ते पशुकल्पा नराधमाः परकान्ता अपि स्वभोग्या व्यधुः

क परकान्तासंसर्गो महापातकमिति मन्यमाना आर्यवंशजाः, क च यथातथा मानवान्विजित्य तदीया भार्याः स्वभोग्याः करणीया इति मन्वाना महंमदीयाः. निःसंशयं कश्चन पक्षपातरहितः सच्छीलो जनो महंमदीयानामितिहासं पश्येत्तदा स तानधमतमान् वदेत्! न केवलं पशुवदस्मद्भारतललनासु तैश्चेष्टितं किंतु सकलसौख्याकरासु संसारसुखसाधनीभूतासु गोष्वपि व्याघ्रायितं. व्याघ्रो हि यथा सहसा गां भक्षन्नगणिताञ्जनांस्तदीयदुग्धवियोगेन दुःखितान्विदधाति तथैवै-तेऽपि मानवराक्षसाः सहसा गोभक्षणतत्पराः सर्वमपि भारतवर्षं दुर्लभगोरसं शुष्काऽस्थिबालकं चक्रुः. बान्धवाः! यत्र समये क्रूरैर्यव-नैराक्रान्ताः क्षत्रियराजाः परस्परद्वेषेणासहायाः पराजिताः स्वर्गमग-च्छंस्तदा सहसा प्रविष्टा अकुतोभया यवना अस्माद्भारतवर्षादगणितां सम्पदं जह्रुः. आर्यमहिला दासीश्चक्रुः देवालयानि च नाशयामासुः ब्राह्मणांश्च जघ्नुः गोसंघांश्चाभक्षयन् तत्र धर्मः कथं स्थिरो भवतु. सर्वेऽपि तादृशप्रलयकालादवशिष्टा जनाः कालपरिवर्तनं वीक्ष्य यव-नसेवां स्वीकृत्याजीवन्. अन्ये चैहिकैश्वर्यलोभाकुला जनाः स्वपावि-त्र्यस्य तथा कुलस्य चाभिमानं विहाय यवनेभ्यः स्वकन्यां वा स्वभगिनीं वा वितेरुः. तेऽपि तावतैव सन्तुष्टास्तेभ्यः प्रभूतं द्रव्यं समं विशालेन भूविभागेनादुः. अपरे च विस्मृतस्वधर्मयोग्यताका यवनराजानां प्रीतिं संपादयितुं तदीयं धर्ममन्वसरन्. तेऽपि धर्मान्धा अवशिष्टान् सनातनधर्मानुयायिनः स्वधर्माननुसरणं निमित्तं विधाय कठिनेन धनदण्डेनादण्डयन्.

एवं सर्वतो विघ्नैर्व्याप्तोऽयं धर्मकल्पद्रुमः कष्टां दशामाप. ते च तदीयाः स्वामिभक्तास्तदीयामिमां दशामवलोक्य खिन्ना आसामा-

पदां दूरीकरणाय भगवन्तं प्रार्थयामासुः. करुणाघनः परमेश्वरस्तां कथं स्वीचकारेति वयमग्रे पश्यामः.

( ३ )

यदा तु इत्थं भारतवर्षस्य तथा सनातनधर्मस्य दुरवस्थामवालोकयत्तदा श्रीगोपालनाथो भक्तरक्षणायावतर्तुमियेष. स हि मेने लक्ष्मणभट्टस्य परमपवित्रे वंशे यदि संभविष्यामि तदा मम वरः सफलीभवेदिति यतः शीघ्रमेव सकलजगद्वंद्या सा परमसाध्वी 'इल्लमादेवी' गर्भवती बभूव. तां चापन्नसत्वामवलोक्य लक्ष्मणभट्टोऽपि स्वमनोरथद्रुममंकुरितं मेने. यथा यथा च स गर्भो ववृधे तथा तथा सा देवी सूर्यगर्भायाः प्राच्याः श्रियं बभार. सा चेल्लमादेवी सर्वदा गोपालोपासनातत्परा सर्वानपि समतोषयत्.

महाभागो लक्ष्मणभट्टो यदा काशीं गतः परमभक्तस्य कृष्णदासश्रेष्ठिन आग्रहेण तदीये गृहेऽवसत्तदा तस्मिन् प्रदेशे यवना राज्यमकुर्वन. यवनराज्यस्य स्वरूपं मया देशपरिस्थितिनिरूपणसमय एव निरूपितं. अधिकं च तेषामितिहासग्रंथेभ्यः सुज्ञैर्वाचकैरवधारणीयम्. यवनराज्ये कीदृशमपि स्वास्थ्यं नासीदित्युक्ते तावतैव तदीयं स्वरूपमवगतं भवति. श्वः को वा राजा भवेत्. श्वः को वा कस्य भार्यामपहरेत्. कस्य कुटुंबं द्रव्येण समं नश्येदिति शक्रोऽपि न जानाति स्म. सज्जनाः ! सकलदुःखदायिनि अस्मिन्नस्वास्थ्ये प्रजाजनाः कियन्ति दुःखानि अन्वभविष्यन्निति भवद्भिरेवानुमातव्यं.

एवंस्थिते लक्ष्मणभट्टः स्नानार्थं गंगातीरं गतो निवासिजनमुखसंचारिणीमिमां वार्तां शुश्राव. 'श्वः परकीया यवनाधिपा बलवता

सैन्येन सममिदं नगरमाक्रमिष्यन्ति. तेन सममत्रत्या यवनाधिपा योत्स्यन्ते. यो हि विजयी भवेत् स नागरिकान् लुण्ठित्वा स्वकोशपूरणं करिष्यतीति. अनया वार्तया सर्वेऽपि काशीनगरीवासिनश्चिन्ताकुला यवनस्वभावं सम्यक् जानन्तः स्वप्राणरक्षणार्थं यथाभिमतां दिशं गन्तुं प्रारभन्त.

महाभागो लक्ष्मणभट्टोऽपि तां वार्तामाकर्ण्य भीतः कृष्णदासश्रेष्ठिनः सकाशात् कतिपयान् सेवकान गृहीत्वा त्वरितं चंपारण्यमार्गेणानुदधाव. तस्मिन समये कठोरगर्भा तदीया सती इल्लमादेव्यपि आसीत्. सा च सार्थेन समं धावितुमशक्नुवाना शनैः शनैर्गच्छन्ती कचित् कस्यचिच्छमीवृक्षस्याधस्तादुपविवेश. समीपं वाहिन्या महानद्याः शीतलेन वातेनापनीतपरिश्रमा रात्रौ महानदी तीर्थमिवालौकिकतेजःसंपन्नं बालकं प्रासूत. तस्मिन्दिने 'शरवह्निबाणेन्दुमिताब्दस्य विक्रमशकस्य कृष्णपक्षस्यैकादशी तिथिरासीत्. सा तु पुत्रस्नेहाकुलाऽपि भीतिविह्वला तं सप्तमासं योगसमाधौ लीनं पुत्रं मृतं मन्यमाना स्वीयवस्त्रार्धेनाच्छाद्य तस्य महातरोरधस्ताद्वर्तमाने कोटरेऽस्थापयत्. स्वयं चाग्रे गतं सार्थमनुदधाव. अचिरादेव भद्रपुरनाम्नि ग्रामे सार्थेन समं स्थितं स्वान्वेषणोद्यतं स्वभर्तारमवलोक्य सन्तुष्टा तस्मै तत् सर्वं वृत्तं न्यवेदयत्. सोऽपि स्वीयं दौभार्ग्यं मन्वानस्तूष्णीं तस्थौ.

## ( ४ )

अथ तस्यां इल्लमादेव्यां स्नात्वा भुक्त्वा च सुप्तायां तथा महाभागे लक्ष्मणभट्टे तथा तदीयायां मातरि च, जाग्रत्सु सर्वेषु सार्थपालकेषु सेवकेषु अकस्माल्लक्ष्मणभट्टाय तथा तन्मात्रे भगवान् स्वप्न-

प्रदर्शयत्. अवोचच्च तं 'वत्स ! महाभाग ! लक्ष्मणभट्ट ! अहं हि परमप्रियस्यास्य पुष्टिमार्गस्य प्रसाराय भक्तानामनुग्रहाय च त्वदीय-कुलेऽवतीर्णोऽस्मि. त्वदीया पत्नी इल्लमादेवी मां शमीतरोरधस्ता-न्निधाय भीत्या धावमानाऽत्रागता. अहं च तत्र सुखेन तिष्ठामि. यदर्थं भवद्भिर्वाराणसी परित्यक्ता स्वीकृतं चेदमरण्यगमनं सोऽयं यवनानामुपद्रवः खलु शान्तः प्रबलं हि यवनानां तथा दण्डिनां युद्धमभूत्तत्र नितरां यवनाः पराजिताः पलायनेनात्मानमरक्षन्. अधुना च तत्र शान्तिर्वर्तते. तदागच्छ वाराणसीं. मार्गे च शमीत-रोरधस्तादहं तिष्ठाम्येवेति. उक्त्वा चेत्थं स तिरोदधे. तिरोहिते भगवति गोपालनाथे स लक्ष्मणभट्टः प्रबुद्धः स्वमातरमबोधयत्. साऽपि प्रबुद्धा तादृशमेव सर्वं वृत्तान्तं स्वयमनुभूतं न्यवेदयत्. तेन वीतसंशयः स लक्ष्मणभट्टः परमात्मपुत्रदर्शनस्नेहाकृष्टमनाः सर्वानपि सार्थमुख्यान् पुनः काशीगमनाय निवेदयामास. ते तु अज्ञातसत्य-तत्वाः शत्रुलुण्ठनभिया प्रतिनिवर्तितुं नैच्छन्. तांश्च प्रतिनिवर्तनानु-त्सुकान् वीक्ष्य तस्य माता ताञ्जगाद–बान्धवाः ! भगवता स्वय-मागत्य निवेदितोऽयमर्थः कथमसत्यो भविष्यति. तथापि यद्याशंका तदा प्रातःकाले यदि वाराणसीतो वार्ताहार आगच्छति तदाऽस्मा-भिर्वाराणसीं प्रति गन्तव्यमन्यथा नेति. अंगीकृत्य चेमं नियोगं ते सर्वेऽपि सार्थस्थास्त्यक्तनिद्राः सूर्योदयकालं प्रत्यपालयन्. अचिरादेव भगवति सूर्यनारायणे तदिदं वृत्तं सर्वेभ्यो निवेदयितुमिव त्वरयो-दयाचलमारूढे सति अकस्मात् कृष्णदासश्रेष्ठिना विसृष्टो वार्ताहारः समाजगाम. न्यवेदयच्च तथैव सर्वं वृत्तम्. तदाकर्ण्य ते सन्तुष्टाः सर्वेऽपि सार्थवाहाः काशीं प्रति गन्तुमन्वमोदन्त. निर्गतेषु च तेषु

सार्थवाहेषु स महाभागो लक्ष्मणभट्टो भगवदवतारदर्शनपर्युत्सुकः समं साध्व्या पत्न्याऽग्रे गत्वा तत्स्थलमन्वेषयति स्म. भद्रपुरे च स्वकटकमवतार्य सर्वेऽपि ते सार्थवाहाः स्वनिवासमकल्पयन्. सा च महासाध्वी इल्लमादेवी स्वतनयस्थापनस्थलं सम्यग्जानन्ती सहसा तमेव शमीतरुमागच्छत्. अपश्यच्च तं तरुं परितः प्रबलेन वह्निना परिवेष्टितं. सा च तं तरुं वह्निसमाक्रान्तमवलोक्य विस्मिता भीता शोकविह्वला यावत्सविशेषमपश्यत्तदा स्वीये वस्त्रार्धे परिक्रीडन्तं सप्तमासं बालं ददर्श. वीक्ष्य चेत्थं भर्त्रेऽदर्शयत्. सोऽपि विस्मितस्तनयस्नेहप्रस्नुतस्तनीं तां स्वपत्नीमवदत्—यद्यप्ययं वह्निः सर्वत एनं बालं व्याप्नोति तथापि त्वामेष नापकरिष्यति. यदि च तेऽयं तत्वत एव तनयः स्यात्तदा तव गमनेनाग्निः शमं गमिष्यति. तद्गच्छ. परीक्षस्व स्वभाग्योदयं. भगवान् गोपालनन्दनः स्ववचनं सफलीकुर्यादेवेति.

भर्तुरिमामाज्ञां शिरसांगीकृत्य सा देवी निःशंकं तं दावानलं प्रविष्टा निरातंका तं तनयं प्राप. स तु वह्निस्तस्मिन्नेव क्षणे कृतकृत्यो योगीव शान्तो बभूव. तनयोऽपि समीपमागतां तां देवीं मातृत्वेन प्रत्यभिजानन्निव हस्तावुन्नमय्यास्मयत. यदा सा भगवती इल्लमादेवी तं स्वभाग्यनिधिमिव वंशवर्धनं सकलभक्तजनोद्धारार्थमवतीर्णं स्वहस्ताभ्यामुत्थापयित्वा स्वहृदयेन समयोजयत्तदा दिवि दिव्याः पटहा उच्चैरनिदन्. स्वर्गलोकात्सहसा पुष्पवृष्टिरभूत्. गोकुले च—सर्वा अपि गावः प्राप्तं पयोऽतिरेकं वोढुमशक्नुवन्त्यो वर्षासु मेघमंडल्य इव पयो ववर्षुः.

इमं स्वभाग्यस्योत्कर्षमवलोक्य महाभागो लक्ष्मणभट्टो भगव-

दवतारदर्शनोत्कण्ठां सोढुमसमर्थः सहसाऽग्रे गत्वा तं साक्षादकरोत्. साऽपि इल्लमादेवी स्वभर्तारं समीपमागतमवेक्ष्य सानन्दमुत्थिता तं स्वसर्वस्वं बालं हस्ताभ्यां वहन्ती सविनयं जगाद—नाथ ! एषोऽस्माकं वंशवर्धनो बालो निष्करुणया मयाऽस्थाने त्यक्तोऽपि स्वयं भगवता प्रदत्तः. अयं हि निःसंदेहं भगवदवतार एव. कथमन्यथा सकलदाहकोऽयमग्निर्नैनमदहत्. तदयं मया त्यक्तोऽपि भवद्भिः क्रोडे करणीय इति. उक्त्वा चेत्थं तद्धस्तेऽर्पयामास.

लक्ष्मणभट्टस्तं गृहीत्वा परिचुम्ब्य च तदीयौ शिरीषपुष्पादपि सुकुमारौ कपोलौ स्वजन्म धन्यममन्यत. तस्मिन्नेव समये दिव्या वाणी जगाद—अधुना कलियुगं कृतयुगं भविष्यतीति.





## ५ बाल्यलीलाः निखिलविद्याधिगमश्च.

१ विविधलीलावर्णनम्.
२ व्रतबन्धः शिक्षा च.
३ पितुर्वैकुण्ठगमनम्.
४ स्वनिवासगमनम्.

( १ )

अत्रान्तरे ते भद्रपुरेऽवस्थिताः सर्वे सार्थवाहाः समागताः तं बालकं तेजस्विनमवलोक्य विस्मिताः सत्वरं कृष्णदासाय सर्वं वृत्तं न्यवेदयन्. सोऽपि तन्निशम्य हर्षाकुलः सजवं तत्रागत्य सर्वं तदवेक्ष्य सन्तुष्टस्तस्मिन्नेव पुरे सूतिकागृहादिकं चकार. ततः पिता लक्ष्मणभट्टस्तस्य बालस्य यथाविधि जातकर्मादिकं व्यासजैमिनितुल्यैर्विप्रैरकारयत्. तस्मिन् समये तत्र मिलितास्ते सर्वेऽपि ज्योतिर्विदो ब्राह्मणास्तस्य बालकस्य शुभानि लक्षणान्यवलोक्य विस्मिता अवदन्. विप्रश्रेष्ठ ! एष ते पुत्रो न साधारणो नरः किंतु स्वभक्तानुग्रहाय भूमाववतीर्णो गोपालनन्दन एव. अस्मिञ्जगतीतले निरुद्धां भगवतो भक्तिसरणिमुद्धर्तुमिच्छुरयं परमपवित्रे त्वत्कुले प्रादुर्बभूव. वयं तु सर्वथाऽस्य दर्शनेनात्मानं पूतान् मन्यामह इति. महाभागो

लक्ष्मणभट्टो विदुषां विप्राणां मुखेभ्यः स्वपुत्रस्य कीर्तिमाकर्ण्य संजातमोद आत्मानं कृतकृत्यममन्यत. एकादशेऽहनि तु अयं सर्वेषां वल्लभो भविष्यतीति जानन्वोत सकलजगत्पालकस्य गोवर्धनोद्धारकस्यायमतिवल्लभो भविष्यतीति वा मन्यमानः पिता तं पुत्रं वल्लभनाम्नाऽलंचक्रे.

वाचकाः ! ये खलु इह भारतवर्षे सर्वतः प्रसृतं भक्तिमार्गं गोपायन्ति प्रसारयन्ति च चत्वारो दिग्गजा इव परमवैष्णवास्तेषु एक एत एव वल्लभाचार्यचरणा इति भवद्भिरवश्यं ज्ञातव्यं. यदा च महानदी पर्वतमध्यान्निर्गच्छति तदा न तां कोपि भागीरथीं वदति परन्तु यदा सा प्रयागक्षेत्रमागच्छति तदा तस्या गभीरं तत्स्वरूपमवलोक्य नितान्तं विस्मिता जनास्तां सादरं भागीरथीं वदन्ति. एतादृश्येवावस्था भगवद्भक्तानां वा सज्जनानां वेति अलं पल्लवितेन.

अथ कतिपयैरेव मासैः स बालको मातरं तथा पितरं प्रत्यभिज्ञाय स्मितमधुराभिमुखक्रियाभिः सर्वेषामपि हृदयान्याजहार. स च यथायथाऽवर्धत तथा तथा तस्य चापल्यमपि अवर्धत.

एकदा शनैःशनैः संक्रमणशीलः श्रीवल्लभः कार्यान्तरव्यासक्तां स्वमातरमवलोक्य तया निष्कासितं नवनीतं भक्षयामास. अवशिष्टं च भूमितले निक्षिप्यादूषयत्. इमं चास्मिन् कार्ये समासक्तं दूरादवलोक्य ससंभ्रमं समागता तदीया माता तं परं निर्भर्त्सयामास. अथ विनष्टं नवनीतमवलोक्य खिन्ना सा इल्लमादेवी कार्यान्तरव्यासक्ताऽभवत्. ततः पुनरपि संक्रमणेन जलभाण्डे हस्तं निक्षिप्य श्रीवल्लभस्तदेवालोडयत्. तं च जलभाण्डालोडनासक्तमालोच्य सकोपमागत्य सा यदा पश्यति तदा तत्र नवनीतगोलको वर्तत एव. तं

च नूतनमवलोक्य विस्मिता सती किमपि किमपि ध्यायन्ती परं विसिस्मिये.

एकदाऽयं श्रीवल्लभः स्वपितुर्लक्ष्मणभट्टस्य निवासगृहं प्रविष्टः. तत्र बहूनि शास्त्रपुस्तकान्यासन. तानि सर्वाण्येकतो निक्षिप्य यत् खलु साधारणं परमसूक्ष्माक्षरविन्यासं भागवतपुस्तकमासीत्तदुद्घाट्य वाचयन्निवातिष्ठत्. यदा च कुतश्चित्कार्यार्थं गतः स लक्ष्मणभट्टो गृहमागतो निवासस्थले भागवतपुस्तकमनुवाचयन्तमिव स्थितं तं स्वपुत्रमवलोक्य विस्मितः शनैःशनैः पृष्ठतो गत्वा यावत् पश्यति तावद्दशमस्कंधे रासक्रीडाप्रकरणमवलोकयन्तं तमपश्यत्. तदवलोक्य परमानन्दमग्नः स भक्तवरो लक्ष्मणभट्टस्तदिदं वृत्तं तन्मात्रे निवेद्य तां स्वसन्तोषार्धभागिनीं चक्रे.

श्रीवल्लभो यदा पद्भ्यां संक्रमितुमारभत तदा स सर्वस्मिन्नपि गृहे सर्वेष्वपि स्थलेषु पर्यटत्. एकदा मध्याह्नकाले सर्वेष्वपि गृहजनेषु भुक्त्वा निद्रायमाणेषु सत्सु माता इल्लमादेव्यपि सर्वाणि गृहकर्माणि कर्माणि विधाय सुष्वाप. श्रीवल्लभश्च तावतैव लब्धावकाशः शनैः शनैर्बहूनपि विस्तीर्णान् गृहविभागानतिक्रम्य भित्तिनिर्मिते रासक्रीडाचित्रेऽस्खलितदृष्टिर्योगीव भगवन्तं यशोदानन्दनं ध्यायन्निवातिष्ठत्.

यदा तु माता इल्लमादेवी प्राबुध्यत तदा सा श्रीवल्लभमपश्यन्ती सर्वत्र पर्यटत्. चिरादपि तत्र तत्र तमन्विष्यायशस्विनी कातराऽभूत्. तस्मिन्नेव क्षणे तत्र लक्ष्मणभट्टोऽपि समाययौ. सोऽपि पुत्रमदृश्यमानमवगम्य चिन्तातुरः परिशोधयति स्म. अत्रान्तरे कृष्णदासश्रेष्ठिनः सेवकेन निवेदितौ तौ दम्पती यावत्त्वरया समागत्या-

पश्यतां तावत्तं श्रीवल्लभं रासक्रीडासक्तराधारमणप्रतिमाबद्धनेत्रमपरं चित्रमिव. तदेतत् सर्वं प्रत्यक्षीकृत्य कृष्णदासश्रेष्ठिनः सेवकास्तथाऽन्ये जना अत्यन्तं विस्मितास्तं साधुश्रेष्ठममन्यन्त. लक्ष्मणभट्टोऽपि प्रतिदिनं तदीयं चरितं प्रत्यक्षीकृत्य विस्मितस्तस्मिन्पुत्रभावं त्यक्त्वा भगवदवतारभावमबध्नात्.

एवं नानाविधा लीलाः कुर्वन् श्रीवल्लभो ववृधे. यदा च स्पष्टमक्षराण्युच्चारयितुं प्राभवत्तदा पिता लक्ष्मणभट्टस्तं मूलाक्षराणि पाठयामास. स तु अनायासेन ज्वाला कर्पूरमिव सर्वमपि तं तं विषयं जग्राह. तस्य तदिदमपूर्वं बुद्धिपाटवमालोक्य विस्मिताः सर्वे गुरवस्तथा तदीयः संबन्धिजनस्तं सत्यमेव भगवदवतारं मेने.

श्रीवल्लभो यदाऽक्षरप्रत्यभिज्ञानकुशलो बभूव तदाप्रभृति स सर्वदा भागवतपुस्तकमेव वाचयामास. पूर्वमपि भागवतपाठं कुर्वतः स्वपितुः समीपे स्थित्वा सर्वदा पाठमशृणोत्. एकदा मध्याह्नसमये स्वसमवयस्कान् बालान् गृहीत्वा श्रीवल्लभः क्रीडितुमारभत. तत्र ये खलु तस्य क्रीडासहाया आसंस्तान् प्रथमतः स भागवतार्थं सम्यगुपदिशन्नन्ते तेभ्यो रासक्रीडारसमुपदिदेश. ते च बालका अपि तथा भक्तिभावपूर्णा अभवन् यथा विस्मृतदेहभावा आनन्देन भगवन्नाम घोषयन्तो ननर्तुः. श्रीवल्लभस्तु प्रेमातिरेकेण नयनकमलस्रवदश्रुबिंदुस्तेषां समूहे भक्तशिरोमणिरिव रराज.

एकदा च श्रीलक्ष्मणभट्टस्य गौः पंचत्वं जगाम. तेन सर्वेऽपि जना अत्यन्तं दुःखाकुला अजायन्त. यतः सा गौर्लक्ष्मणभट्टाय कृष्णदासश्रेष्ठिना प्रदत्ताऽसीत्. सापि शुभलक्षणैवाऽसीत्. तां स्वर्गं गतामालोक्य खिन्नेषु सर्वेष्वपि गृहजनेषु श्रीवल्लभः सहसोत्थाय

गोष्ठं प्रविश्य तां स्वहस्तकमलेन पस्पर्श. तस्मिन्नेव क्षणे सा गौः सुप्तोत्थितेवोत्थाय तस्थौ. सर्वेऽपि जना इदमाश्चर्यं प्रत्यक्षीकृत्य मूढास्तूष्णीमतिष्ठन्. बान्धवाः ! श्रीवल्लभो बाल्ये बहुविधा लीलाश्चक्रे. यासां वर्णने विस्तरो भवेत्.

बान्धवाः ! केचनाधुनिकशिक्षणसुशिक्षिता इत्थं मन्यन्ते सर्वेष्वपि महतां साधुवराणां चरित्रेषु यद्बाललीलावर्णनमस्ति तत् सर्वमपि कविकपोलकल्पितमिति. परन्तु अहं तान् प्रति वदामि. ये खलु प्रौढे वयसि अलौकिकप्रतापशालिनः साधुवरा वा वीरा वाऽजायन्त ते चाकस्मादेव तारुण्ये तादृशं प्रतापविधानसामर्थ्यं नालभन्त. किंतु तदीयाः प्राचीनाः संस्कारा एव तादृशा आसन्नित्यंगीकर्तव्यमेव. एवं च यथा यथा तेषां संस्काराणामुद्बोधोऽभवत्तथा तथा तादृशोऽलौकिक्यो लीला अभवन्नित्यत्र कविकपोलकल्पनाया अवकाश एव न. वस्तुत इमे जनाः स्वसादृश्येनैव सर्वत्रानुमिन्वन्ति. अस्तु.

( २ )

एवंविधा बाल्यलीलाः कुर्वन् श्रीवल्लभो यदा सप्तवर्षोऽभूत्तदा पिता तमुपनेतुमिच्छुः स्वदेशं गन्तुमैच्छत्. परन्तु परमोदारो भक्तः कृष्णदासश्रेष्ठी श्रीवल्लभस्योपनयनोत्सवं काशीक्षेत्र एव विधातुमाग्रहमकरोत्. तेन स लक्ष्मणभट्टस्तत्रैव स्थित्वा सर्वमुत्सवं कर्तुं स्वसंबन्धिभिः समं निरचिनोत्.

अथ काशीक्षेत्रवासिनो ज्योतिःशास्त्रपारंगतान्विदुष आहूय यज्ञोपवीतोत्सवविधानार्थं शुभदिनं निरणाययत्. तस्मिन्दिने समाग-

मनार्थं स्वीयेभ्यो निमंत्रणानि ददौ. तेऽपि श्रीवल्लभस्य भगवदवतारकीर्तिं निशम्य दिदृक्षवो दूरतोऽपि समाययुः. तैस्तैर्नानादेशतः समागतैर्जनैस्तन् खलु लक्ष्मणभट्टस्य गृहं संकुलं बभूव. महाभक्तः कृष्णदासश्रेष्ठी तु सर्वामपि साधनसंततिं ददत्तं लक्ष्मणभट्टं निश्चिन्तमकरोत्.

ततः संप्राप्ते शुभदिने स लक्ष्मणभट्टो महताऽनन्देन गणपतिं परिपूजयित्वा यज्ञोपवीतोत्सवमारभत. तस्मिन दिने श्रीवल्लभो मात्रा समं मातृभोजनार्थमुपविष्टो निःसंशयं यशोदया समं भोक्तुमुपविष्टस्य कृष्णस्य लीलां स्वीचकार. सर्वाश्च तत्र मिलिताः पौरांगनास्तस्य श्रीवल्लभस्य सौन्दर्यं तथा मुखकमलविलासिनीं दिव्यां कांतिमवलोक्य परमतुष्यन्. ततः क्रमेण सर्वानपि विधीन्विधाय लक्ष्मणभट्टो विहिते समये तस्मै सावित्रीमुपदिदेश. तत्र मिलितास्ते सर्वेऽपि तत्संबन्धिनस्तथा समाहूता जनास्तौ पितापुत्रौ परमतेजस्विनः सूर्यस्य प्रतिबिंबद्वयममन्यन्त. स निसर्गत एव तेजस्वी पितुः सकाशात् सावित्रीतेजो लब्ध्वा ग्रीष्मसूर्य इव दुर्दर्शो बभूव. बटुवेषधारी स श्रीवल्लभः प्रतिदिनं गुरोर्विष्णुचित्संज्ञकादुपाध्यायात् संध्यादिकं ब्रह्मकर्म शिक्षमाणस्त्वरितमेव सकलं स्वाधीनमकरोत्.

एवं लक्ष्मणभट्टस्तं श्रीवल्लभं व्रतिनं विधाय विद्याध्ययनार्थं तांस्तांस्तत्तच्छास्त्रनिष्णातान्विदुष आहूयाध्यापनार्थं न्ययुंक्त. तेषु च सर्वेषु विष्णुचिदुपाध्यायः परमवैदिकः स्वशाखाध्यायीति मत्वा लक्ष्मणभट्टः प्रथमं स्वशाखाध्ययनार्थं तस्मै एव श्रीवल्लभं ददौ. सोऽपि तादृशं मतिमन्तं शिष्यं लब्ध्वा धन्यंमन्योऽचिरादेव सर्वां स्वशाखां पाठयित्वा यजुर्वेदमपि पाठयामास. तत ऋग्वेदाध्ययनार्थ-

मन्यत्र जगाम श्रीवल्लभः. एवंरीत्या चतुरोऽपि वेदानधीत्य लब्धज्ञानराशिः सर्वाण्यपि शास्त्राणि शीघ्रमेव करतलामलकसदृशान्यकरोत्.

एवं सर्वेषु शास्त्रेषु लब्धपाण्डित्यप्रकर्षः स श्रीवल्लभः स्वबुद्धिचातुर्येण सर्वानपि काशीनिवासिनः पण्डितश्रेष्ठान्विस्मापयामास. महतीषु सभास्वपि कृतप्रवेशो लीलयैव तत्र विवदमानान्विदुषो निरुत्तरानकरोत्. तेऽपि तं श्रीवल्लभं भगवदवतारमेव मन्यमाना न विवदन्ते स्म.

पिता लक्ष्मणभट्टः स्वपुत्रस्येदृशमप्रतिहतं पाण्डित्यमवलोक्य सन्तुष्टोऽपि तत्सर्वं भगवदनुग्रहं विना व्यर्थं मन्वानः शुभे समये तस्मै कृष्णशरणार्थबोधकं महामंत्रमुपदिदेश. सोऽपि च तं सकलशास्त्रसारमिव महामंत्रोपदेशं प्राप्य कृतकृत्यः सर्वमग्रिमं स्वकीयं कृत्यमांजस्येनापश्यत्. निसर्गत एव तैलबुद्धिः श्रीवल्लभो लक्ष्मणभट्टसदृशात् महाभक्तवरात् महामंत्रं लब्ध्वाऽत्यन्तं पावनोऽभूदिति किमु वक्तव्यं.

( ३ )

एवं सर्वं स्वमनोरथं सफलं वीक्ष्यात्मानं कृतकृत्यं मन्यमानः पिता लक्ष्मणभट्टो मनसि विचारयामास—अहं हि एतेषां मम पूर्वजानां सोमयाजिनां कुले जनित्वा प्रथमत एव पवित्रोऽस्मि. मया हि सोमयागा विहिताः, भगवद्दर्शनमपि लब्धं. एष शुभोदयः पुत्रोऽपि भगवत्कृपया लब्धः. अयमपि आवश्यकोपनयनसंस्कारसंस्कृतोऽधिगतपाण्डित्यः सर्वथा सांसारिककर्मणि उपयुक्त एव. विवा-

हार्दिकं यद्यस्मै रोचेत यदि वा भगवते तदा तथा भवेत्. अहं तु पश्यामि नास्त्यधुनाऽस्मिञ्जगतीतले स्थितेः प्रयोजनं. जन्मन आरभ्य भगवान् मदनमोहनः सम्यक्सेवितः. तदीयां सेवां तु अहं स्वप्नेऽपि त्यक्तुं नेच्छामि प्रत्युत भूयोभूयो जनित्वा तमेव सेवितुं वांछामि. तत्तदेव कर्तुं वैकुण्ठ एवाश्रयणीयः. परन्तु प्रथमतो भगवानेव प्रष्टव्यः. यदि सोऽस्ति कार्यान्तरमिति वदेत्तदा स्थातव्यमन्यथा गन्तव्यमिति.

विचार्य चैवं स ध्यानसमये स्वोपास्यदैवतं मदनमोहनं कर्तव्याज्ञापनाय पप्रच्छ. सोऽपि परमानन्देनात्मानं दर्शयित्वा जगाद— वत्स ! लक्ष्मणभट्ट ! त्वदीये कुलेऽहमेव श्रीवल्लभरूपेणावतीर्णोऽस्मि. सर्वथा त्वया निःसंशयं कृत्स्नोऽपि संसार उपकृत एव. सन्तुष्टोऽस्मि त्वदीयसेवनेन. इदानीमत ऊर्ध्वमिह भारतवर्षे महाकार्यं श्रीवल्लभः करिष्यति. येन सर्वेऽपि जगतीतलवासिनो मानवा उपकृता भवेयुः. तेन रूपेण त्वदीया कीर्तिरक्षय्या तिष्ठेत्. सम्प्रति नास्ति आवश्यकता तव मृत्युलोके स्थातुं. तदागच्छ वैकुण्ठलोकं. भुंक्ष्व स्वकर्मोपार्जितान्दिव्यान् भोगान्. प्रीतोऽहं तुभ्यं तत्रस्थाय श्रीवल्लभलीलादिकं दर्शयिष्यामीति.

निशम्य च भगवदादेशं सन्तुष्टः स लक्ष्मणभट्टस्तं शिरसाऽहृत्य स्वपुत्रं तथा स्वपत्नीं साध्वीं 'इल्लमादेवीं' आहूय तमादेशं तौ श्रावयामास.

निशम्य च तद्वृत्तं तावुभावपि नातिविह्वलौ तावदभूताम्. तावपि परमवैष्णवौ भगवता समादिष्टं पितुर्वैकुण्ठागमनमाकर्ण्य सानन्दावेवाभूतां. अथ पिता लक्ष्मणभट्टः स्वस्य वैकुण्ठगमनसमयं समीपमागतमवलोक्य समीपस्थं मुकुलितहस्तयुगलं नयनयुगस्रवदानन्दाश्रुजलं तं श्रीवल्लभं तथा तत्समानावस्थां पत्नीं इल्लमादेवीं जगाद. वत्स !

श्रीवल्लभ ! अहं त्वां भूतलवासिनां मानवानां कल्याणाय समवतीर्णं गोकुलनाथमेव मन्ये. तथापि केवलं लौकिकीं दृष्टिं स्वीकृत्य यदहं वक्ष्यामि तत् सावधानेन मनसा शृणु. वत्स ! अयं लोको नाम महामोहास्पदं. बहवो हि योगबलशालिनोऽस्मिन् संसारे मोहमागत्याधोगतिं प्राप्ताः. तत्केनाऽपि मतिमता मानवेन प्रथमत ऐहिकविषयोपभोगलोलुपेन न भवितव्यं. मानवजातिर्भगवता केवलं विलासार्थं नोत्पादिता. यान्हि पशवोऽसंस्कृतबुद्धयो विषयोपभोगान् कुर्वते तानेव विषयोपभोगान् कुर्वाणा जना आत्मानं विलासिनो मन्यन्ते. वत्स ! विशेषतश्च ब्राह्मणेन सर्वदा शान्तमनसा परोपकारपरेण ज्ञानशीलेन भवितव्यं. ये खलु ब्राह्मणकुलेषु जनित्वा द्रव्यलोलुपा भोगव्याकुलाश्च भवन्ति, तैः कलंकित एव ब्राह्मणवंश इत्यहं भावये. वत्स ! सम्प्रति विपरीतः कालः. परकीया महंमदीया इमां भारतभुवमाक्रम्यास्मान् दीनान् धर्महीनानपि कर्तुं प्रयतन्ते. अस्मदीयाश्च पूर्वमीमांसकप्रभृतयः क्रूरैः पशुहननादिभिः साधारणाञ्जनानुद्वेजयन्ति तेन विप्रकृता हीना जनास्तदीयं धर्ममनुसरन्ति. तदस्य सर्वस्यापत्तिसमूहस्य परिहाराय भगवता सर्वसुलभोऽयं भक्तिमार्गः प्रचालितः. परन्तु बलवत्तरदुर्दैवव्याप्ता इमे जनास्तं न जानन्ति तद्यदि अस्योद्धारो भवेत्तदा महच्छुभं स्यात्. जानामि त्वदीयावतारस्येदमेव प्रधानं कृत्यमिति तथापि वात्सल्यादुपदिशामि. भगवान् स्वयमेव सर्वं कार्यं करोति न तत्र मानवबुद्धेरवकाशः परन्तु केवलं लौकिकीं दृष्टिमंगीकृत्योक्तोऽसीति.

उक्त्वा च तमित्थं स महाभागो लक्ष्मणभट्टः स्वपत्नीं इल्लमादेवीमाह. भार्ये ! अहमिव त्वमपि सत्यमेव कृतकृत्यासि. तेन मया समं

वैकुण्ठागमने नास्ति प्रत्यवायः परन्तु अद्यापि भाविनं स्वपुत्रस्य भाग्योदयं द्रष्टुकामाऽसि. तं च काममपूरयन्ती दुःखिता भविष्यसि. तत्त्वं चात्र तिष्ठ. किंच यद्यावामुभावपि वैकुण्ठं गमिष्यावस्तदाऽयं बालः श्रीवल्लभो महादुःखी स्यात्तदस्य पालनाय त्वं किंचित्कालमत्रैव तिष्ठ. सफलयित्वा च स्वकामं तत आगमिष्यसि वैकुण्ठलोकमिति.

एवं सर्वानपि स्वकीयानुपदिश्य कृष्णदासश्रेष्ठिनं चानुगृह्य तदीयं मनोरथजातं पूरयित्वोचिते समये श्रीलक्ष्मणभट्टो वैकुण्ठलोकमाजगाम. सर्वेऽपि तत्संबन्धिनः शिष्यगणाश्च तद्वियोगदुःखाकुला अपि तदुपदेशं मनसि ध्यायन्तो नेतरजनवच्छोकवशा अभवन.

( ४ )

अथ वैकुण्ठं गते महाभागे लक्ष्मणभट्टे श्रीवल्लभः सर्वं तदीयमौर्ध्वदेहिकं सावधानतया चकार. कृष्णदासश्रेष्ठी तु तस्य लक्ष्मणभट्टस्य वियोगेन खिन्नः परं दुःखाकुलो बभूव. तत्र च श्रीवल्लभ आवर्षान्तं सर्वमपि पितृकृत्यं विधाय स्वदेशं गन्तुं मनीषां चक्रे. तां च समाकर्ण्य सरलहृदयो भक्तवरः कृष्णदासश्रेष्ठी शोकाकुलस्तं श्रीवल्लभमुवाच—गुरुपुत्र ! अस्मान् सर्वानपि विहाय तव पिता गुरुवर्यो लक्ष्मणभट्टो वैकुण्ठं जगाम. अवश्यंभाविन्यर्थे मानवस्य शक्तिरेव नास्ति तं प्रतिबद्धुं. परन्तु सकलशास्त्रसम्पन्नः केवलं लक्ष्मणभट्टस्य प्रतिबिंबमिव सकलसज्जनहृदयाह्लादकरो भवानपि मां विहाय स्वदेशं गच्छतीति ज्ञात्वा मूढोऽस्मि. कोवाऽपराधः समजनि मे. अथवा यावत्पुण्यं सज्जना निवसन्ति, समाप्ते च तस्मिंस्तेऽपि तं विहाय गच्छन्तीति यदुच्यते तत्सत्यमिति मन्य इति.

इदं तस्य करुणं वचनमाकर्ण्य दयाघनः श्रीवल्लभस्तमाह्—श्रेष्ठिन्! अधुना केवलमत्रनिवासेन को वा लाभः ? सर्वत्र संचारं विधायाज्ञा जना बोधनीयाः. भगवतो भक्तिमार्गः प्रचारणीयः स्थाने स्थाने भगवतो गोपालनन्दनस्य मूर्तयः स्थापनीयाः. इति मे महती मनीषा. तदधुना गमनार्थमनुजानीहि मां. त्वमपि संसारासक्तिं विहाय रात्रिंदिवं श्रीगोकुलनाथसेवामाचर. एषैव त्वां सुखिनं करिष्यति. अहमपि समये समये त्वां दर्शनेन सन्तोषयिष्यामीति.

विचारशीलः कृष्णदासश्रेष्ठी सर्वं तदुक्तमाकर्ण्य सन्तुष्टः सेवकादिभिस्तं सुगोपितं विधाय प्रभूतं धनादिकं तस्मै वितीर्य स्वदेशं प्रयातुमन्वमोदत. ततश्च शीघ्रमेव मात्रा समं श्रीवल्लभः प्रयागमार्गेण चित्रकूटं तथा भृगुतुंगमवेक्ष्य तत्स्थलं प्राप यत्र स स्वयमाविरभूत्. तत्र च महानदीतीरे स्वशिष्यसंघैर्विरचितायां वेद्यां स्थित्वा महाभागवतपारायणमकरोत्. शिष्यान् कूपमखानयत्. भगवतः श्रीगोपीवल्लभस्य वसन्तोत्सवनिमित्तं दोलारोहणमहोत्सवमपि स तत्रैवाकरोत्. तद्देशवासिनः सर्वेऽपि जनास्तमपूर्वमुत्सवमालोक्यात्मनो जन्म सफलं मेनिरे.





# ६ दुर्वादिजयः विष्णुस्वामिमतप्रसारार्थं सिंहासनाधिरोहणम्.

१ विद्यानगरगमनं

२ वादिविजयः

३ सिंहासनाधिरोहणम्.

४ विल्वमंगलान्मंत्रप्राप्तिश्च.

( १ )

एवं वाराणसीतो निर्गतः श्रीवल्लभः स्थाने स्थाने सर्वानपि यथासम्प्रदायं भगवतो गोपालनन्दनस्य तांस्तानुत्सवान्विधाय लोकानां मनांसि भक्तिमार्गोन्मुखानि विदधत्स्वकर्मणा सर्वानपि जनान्विस्मापयन् कतिपयदिवसैः स्वनिवासमाजगाम. मार्गे च ते ते श्रेष्ठिनस्तथा राजानः श्रीवल्लभस्य श्रीकृष्णभक्तिं निरतिशयामालोक्य विस्मिताः सहसा शरणमागत्य कृपामयाचन. सकलजनोद्धारहेतुना मृत्युलोकेऽवतीर्णः श्रीवल्लभस्तानष्टाक्षरमंत्रोपदेशेन तथा श्रीकृष्णभक्तिविधानाज्ञया चानुजग्राह.

यदा च श्रीवल्लभः स्वनिवासग्राममाजगाम तदा तदीया वहवः संवन्धिनः स्नेहेन तं द्रष्टुं तत्स्थानमागच्छन. श्रीवल्लभोऽपि सहसा तानादरातिशयेन सिषेवे. तदीयो ज्येष्ठो वन्धुर्दीक्षितरामकृष्णः

सर्वानपि प्रत्यभिज्ञाय तेभ्यः श्रीवल्लभस्य गुणगणं न्यवेदयत्. ततश्च क्रमेण श्रीवल्लभस्य विद्यामोदः सर्वत्र प्रासरत्. तस्मिन् प्रदेशेऽपि बह्वो विद्वांसस्तेषु तेषु महाविद्यालयेषु अगणितान्शिष्यगणानपाठयन्. तेन तत्र शास्त्रविद्या जीवन्ती आसीत्. ते सर्वेऽपि विद्वांसः श्रीवल्लभस्य सर्वास्वपि विद्यासु निरतिशयं पाण्डित्यमाकर्ण्यासूयान्विता वादार्थमागच्छन् परन्तु तान् सर्वानपि पण्डितान् श्रीवल्लभो लीलयैव पराजयत.

वाचकाः ! द्विविधा हि बुद्धिः. एका निसर्गत एव संस्कृता. अन्या चेह जन्मनि शास्त्राभ्यासजन्यसंस्कारशालिनी. तत्र द्वितीयामपेक्ष्य प्रथमैव श्रेष्ठेति निःसंदेहं. यतः केवलं मानवप्रयत्नजन्मनां शास्त्राणामानुपूर्वीपाठेन वा तदर्थावगमेन वा लब्धाः संस्कारास्तथा प्रबला न भवन्ति यथा निसर्गतो लब्धाः. यद्यप्युभयमपि शास्त्राभ्यासमपेक्षते तथापि प्रथमा केवलं निलीनसंस्कारबोधाय शास्त्राभ्यासमपेक्षते. द्वितीया तु निसर्गत एव जडा तादृशान् संस्कारानुत्पादयितुं. यथा ह्यग्निज्वाला कर्पूरवटिकां यावता कालेन स्वरूपतां प्रापयति तावता कालेन काष्ठं न. किमत्र कारणं ! ऋते योग्यतायाः. इदं सर्वमज्ञात्वा मूढाः केवलशास्त्राक्षराणां कण्ठीकरणेनात्मानं पण्डितंमन्या विवादाय सन्नद्धा भवन्ति. परन्तु फलं न लभन्त इत्यन्यदेतत्. ते च श्रीवल्लभेन पराजिताः पण्डिताग्रेसराः खण्डितगर्वा दुरभिमानं विहाय तदीयां शिष्यतां स्वीकृत्यात्मनो जन्मनः साफल्यमन्वभवन्. तत आरभ्य श्रीवल्लभस्य विद्यायशस्तोमो महता वेगेन दक्षिणापथे प्रससार. स्वभ्रातुष्पुत्रस्येमामलौकिकीं बुद्धिमालोक्य पितृव्यो जनार्दनदीक्षितोऽपि परं समतुष्यत्.

अत्रान्तरे कश्चन वावदूको विद्यानगरवासिना मातुलेन स्वभगिनीं तथा तदीयं पुत्रं श्रीवल्लभमानेतुं प्रेषितस्तत्राजगाम. स च निवेदितस्वागमनहेतुर्मध्याह्ने सुखेनोपविष्टः श्रीवल्लभं जगाद. वत्स ! श्रीवल्लभ ! विद्यानगरस्य राजा परं धार्मिको विद्वदादरपरो वर्तते. स च प्रतिदिनं तत्तच्छास्त्रकुशलान् पण्डितानाहूय संवादं शृणोति. विद्यानुरूपं तान् सन्मानयति च. सम्प्रति च स वैष्णवमतानुयायिनां तथा शैवमतानुसारिणां च पण्डितानां सभां विधाय शिवोपासना वा श्रेयस्करी किंवा विष्णूपासनेति निर्णेतुमिच्छति. स्वस्वपक्षाग्रहेण विजयार्थं सर्वेऽपि दक्षिणापथस्थाः पण्डितश्रेष्ठास्तत्रागताः. यो हि कृतविद्यः स तत्रागत्य विद्यापरिश्रमं सफलयति. तत्त्वमपि कुतो न गच्छसि ? अहं च मार्गे तत्तत्स्थानेषु प्रसृतं तव विद्यायशः श्रुतवान्. यदि च त्वं काश्यां स्थित्वा सर्वाणि शास्त्राण्यपठस्तदा तादृशपरिश्रमसाफल्यस्यायमेवावसरः. अन्यथा शास्त्राध्ययनेन किमिति.

श्रीवल्लभः सर्वमिदं तन्मुखाद्वृत्तमाकर्ण्य सन्तुष्टः स्वयमचिन्तयत्. एष एव समयः कृष्णोपासनाप्रधानस्य पुष्टिमार्गस्य प्रसारे. अहमपि एतत्कार्यविधानायैव भगवताऽत्र प्रेषितः. प्रायः सर्वेऽपि दक्षिणापथवासिनो विद्वांसस्तत्रागताः. तेन तेषु विजितेषु सर्वत्र भक्तिमार्गस्य प्रचारः सुलभो भवेत्. इति.

ततो मातरं विद्यानगरगमनाय विज्ञापयामास. साऽपि बहोः कालात्स्वबन्धुमदृष्ट्वा खिन्ना जगाद. वत्स ! यद्यप्यहमधुना संसारान्मुक्तैवाऽस्मि तथापि गिरिवरस्थितस्य भगवतो व्यंकटेशस्यास्ति दर्शनेच्छा. त्वमपि पितृसंकल्पितां दक्षिणापथयात्रां विधाय तमनृणं कुरु. इति.

इदं च मातुरभिलषितमाकर्ण्य सन्तुष्टः श्रीवल्लभः स्वपितृव्याय जनार्दनदीक्षिताय साहाय्यदानाय विज्ञापयामास. सोऽपि शकटादिकं सर्वं ददौ. ततः शुभे नियते समये श्रीवल्लभो विद्यानगरगमनार्थं स्वभवनान्निर्जिगमिषुः पितृव्यमाह. पितृव्यचरणाः ! यद्यप्यहमस्मि युष्माकं भ्रातुष्पुत्रस्तेन संपादितस्य द्रव्यस्य दायमर्होमि तथापि न मे संचारे रुचिः केवलं भगवदाराधनं कर्तव्यं, श्रीमहाभागवतपाठश्च, जनाश्च भक्तिमार्गानुसरणार्थमुपदेष्टव्याः, भक्तिमार्गश्च यथाशक्ति प्रवर्धनीय इति मे मनीषा. तदस्मिन् देवालये विद्यमानां शालग्रामशिलां तथा महाभागवतपुस्तकं च यदि मह्यं दास्यथ तदा महानुपकारः स्यादिति. निगद्य चैतत्तूष्णींभूते श्रीवल्लभे तदीया माता इल्लमादेवी भगवतो गोपालनन्दनस्य परमलावण्यमयीं मूर्तिमयाचत.

उदारशीलो जनार्दनदीक्षितो भ्रातुष्पुत्रस्य श्रीवल्लभस्य तथा भातृजायायाश्च विज्ञप्तिमाकर्ण्य जगाद—वत्स ! श्रीवल्लभ ! यत्त्वयोक्तं तत्सर्वं सत्यं. इयं शालग्रामशिला भगवता विरंचिना स्वयमर्चिता भगवतोवदनात्समागता. इदंच भागवतपुस्तकं श्रीगंगाधराचार्यस्य. अयं मुकुन्दः श्रीगोविन्दाचार्यैर्दत्तः श्रीबालकृष्णो विष्णुमुनिना. अयं मदनमोहनस्तु यज्ञकुण्डात्प्रादुर्भूतः. एतत्सर्वमपि प्रयत्नतो रक्षणीयं. एतदेव वैष्णवानां नो धनं. अन्यत्सर्वमुदरस्य कृते. त्वं ह्यस्मत्कुले परमभाग्यवान्संवृत्तोऽसि. कुरु सर्वत्र वैष्णवधर्मप्रसारं. उज्ज्वालयच यशः स्वपूर्वजानामिति. उक्त्वा चेत्थं सर्वं तद्याचितं वस्तुजातं तस्मै ददौ.

अथ सर्वं तद्वस्तुजातं गृहीत्वा निर्गतः श्रीवल्लभः पितृव्यचरणान्नमस्कृत्य तदीयैः शुभैराशीर्वादैर्वर्धितोत्साहो विद्यानगरगामिनं मार्गमन्वसरत्.

( २ )

तं च वादिविजयाय विद्यानगरगामिनमाकर्ण्य तस्य तथा तत्पितुश्च शिष्यास्तं सेवितुं त्वरया समागच्छन्. तत्र सिद्धपदात्समागतौ केतुकमण्डलुलकुटालोकिनामानौ विरक्तौ पितुः शिष्यौ स सर्वेषां रक्षणार्थं न्ययुंक्त. शंभुभट्टं च पाकार्थं. स्वभूस्वयंभूनामानौ कृतविद्यौ वादकुशलौ स्वीयौ द्वौ शिष्यौ वादार्थं न्ययोजयत्. तथा वाराणसीतः समागतान् गौडांस्तथा गुर्जरान् शिष्यान् स तेषु तेषु परिचर्याकर्मसु न्ययुंक्त. तत्रानन्तसेनं तथा मुकुन्दं च ताम्रमंजूषायां स्थापयित्वा मञ्जूषां शिरसोवाह श्रीवल्लभः. महाभागवतपुस्तकं च परमप्रियो दामोदरो नाम तदीयः शिष्य एवावहत्. मार्गे च यत्र यत्र स न्यवसत्तत्र तत्र समागता जनास्तं परमादरयन्. तदुक्तीश्च निशम्य नितान्तमतृप्यन्. श्रीवल्लभोऽपि परमप्रीत्या मदनमोहनं तथा शालिग्रामं च पूजयन् परमादरेणासेवत. प्रथमतः सर्वमपि पाकं भगवते निवेद्य ततः सर्वेभ्यः स्वशिष्येभ्यस्तं प्रसादं विभज्यादात्. बान्धवाः ! अद्यापि सैव रीतिः प्रचलति. ये खलु भगवतः सेवकास्तेभ्यो वेतनादिकं किमपि न दीयते. केवलं भगवतः प्रसाद एव तैर्लभ्यते. तं भुक्त्वैव तैः स्वजीवनं रक्षणीयमिति नियमः. अस्तु.

एवं प्रवसन्तस्ते कतिपयदिवसैर्व्यंकटाद्रिमागच्छन्. तत्राधःस्थितं श्रीरामचन्द्रं परिपूज्य गिरिपट्टमतीत्य बालहरिमपश्यन्. तं प्रणम्योपायनानि धृत्वा तच्चरणोदकं जग्राह श्रीवल्लभः. तत्र च वैष्णवसंप्रदायमूलभूतान् ग्रंथानवलोकयन् श्रीवल्लभः किंचित्कालं तस्थौ. यदा च श्रीवल्लभो वेंकटाद्रिं गत्वा भगवन्तं प्रणनाम तस्मिन्नेव दिने तदीया माता इल्लमादेवी स्वपतिं भगवन्मुखारविन्दे प्रविशन्तं ददर्श.

द्वितीयदिने पुत्रं तत्सर्वं न्यवेदयच्च. सोऽपि सर्वमेतज्जानन् सस्मितमुवाच—मातः ! कृतकृत्याः पितृचरणा निरिच्छाः सन्तो भगवतः स्वरूपं प्राप्ताः. यत्खलु मानवदेहं लब्ध्वा मानवेन कर्तव्यं तत् सर्वमेव कृतवन्त इति.

साऽपि कल्याणी इल्लमादेवी पितृभक्तस्य तस्येमां वाणीमाकर्ण्य सन्तुष्टा तत्सर्वं सत्यममन्यत. अथ कतिपयदिवसैः श्रीवल्लभः स्वमात्रा तथाऽनुयायिभिः समं विद्यानगरं प्राप. स्वागमननिवेदनाय कंचन स्वशिष्यमग्रे प्रेषयामास. स मातुलोऽपि श्रुतभागिनेयकीर्तिस्तमेव समागतमाकर्ण्य हर्षाकुलः स्वयमागत्य तान् सर्वानपि स्वगृहमनयत्. तत्र विधिवत्स्वोपास्यदेवतां पूजयित्वा गृहीतप्रसादांशः श्रीवल्लभो नागरिकजनमुखेभ्यः प्रबलैः शैवैर्वैष्णवा वादे जिता इति वार्तामश्रृणोत्. तस्मिन्नेव समये स मातुलं सर्वं वृत्तमपृच्छत्. स त्ववदत्—वत्स ! चिरात्खल्वयं कलहः प्रचलति. कदाचिच्छैवा वैष्णवान् पराजयन्ते कदाचिद्वैष्णवाः शैवान्. परन्तु अस्मिन् समये शैवैस्तथा चेष्टितं यथा लीलयैव पराजिता वैष्णवा न पुनर्विजयमाशासत इति.

तदिदं तस्य प्रत्युत्तरमाकर्ण्य दुःखाकुलः श्रीवल्लभः स्वयं विचारयामास. यदि अधुना वृथाकलहपरिश्रमभियोपरम्यते तदा परममान्या विष्णूपासना जगति दत्ततिलाञ्जलिः स्यात्. तथासति ममेह कार्यं किं ! तस्मादधुना विवादं विधाय शैवा जेतव्या एव. जितेषु च तेषु अनायासेनैवान्ये जना विष्णूपासनामंगीकरिष्यन्ति इति. विचार्य चैवं प्रातःकाले शिष्यं कमण्डलुं नृपाय स्वागमनं तथा स्वेच्छां निवेदयितुं प्रेषयामास. स तु राजसभां गत्वा स्वगुरोराज्ञां कथ-

यित्वा तथाऽवर्तत यथा तत्रस्थाः सर्वेऽपि जना विस्मितास्तदुक्तिमंगीचक्रुः. राजाऽपि श्रुतश्रीवल्लभकीर्तिः सर्वांस्तान शैवपण्डितान वादार्थमाह्वयामास. डिंडिमेन च तद्वृत्तं सर्वस्मिन्नगरेऽघोषयन्.

अथ द्वितीये दिनेऽनुदित एव भगवति कमलिनीनाथे सर्वे नागरिका जनाः सत्वरमुत्थाय विहितस्नानादिकाः सत्वरा आगत्य राजसभांगणमलंचक्रुः. तच्च वादकौशलं प्रत्यक्षीकर्तुमिच्छतां पौराणां समुदायैः सुमहदपि तदंगणमत्यल्पमिवाभासत. श्रीवल्लभोऽपि प्रातः सत्वरमुत्थाय यथाविधि स्वस्थमनसा तं गोपालनाथं परिपूज्य प्रार्थयामास. त्रैलोक्यनाथ ! वस्तुतोऽहमस्मि तव दासः. दासस्य प्रधानं कर्म स्वामिसेवाविधानं. परन्तु स्वामिनं कश्चन दुर्भाषितेन दूषयेत्तदा तन्निराकरणमपि तस्यैव कर्म. अहं च शैवैर्वैष्णवास्त्वदनुयायिनो जिता इति निशम्य दुःखाकुलस्तेषां निराकरणाय गच्छामि. यदि यशस्वी भविष्यामि तदा तत्र खलु यशो भगवत एव. यदि मदीयदोषादन्यथा स्यात्तदा स दोषो मूढैः स्वामिनि निक्षिप्येतेति चिन्ता मां दहति. तदस्याश्चिन्तायाः स्वामी निराकरणं करोत्विति. तस्य श्रीवल्लभस्येदं दीनं वचनमाकर्ण्य दुःखाकुलः स भगवान गोपालनन्दनः स्वयमाविर्भूयावदत्. वत्स ! त्वमसि मेंऽशः मदीयां भक्तिं जगति प्रसारयितुमेवोत्पादितः. एवंस्थिते तव पराजयः कुतः ? निःशंकं सभां गत्वा तान वावदूकान शैवपण्डितान पराजयस्व. अत ऊर्ध्वं त्वया भक्तिमार्गप्रसारार्थमेव प्रयतनीयं. एवं कुर्वंस्त्वं सर्वदा सर्वत्र यशस्वी भविष्यसीति.

प्रत्यक्षीकृत्य च गोपालनाथं निशम्य चैवं तदुक्तिं वीतसंशयः स श्रीवल्लभ उदितं सकललोककर्मसाक्षिणं भास्करं प्रणम्य शिष्यैः

समनुगतः शिरसि मदनमोहनमंजूषां धारयन् भागवतपुस्तकेन समं राजसभामाजगाम. तमागच्छन्तं वीक्ष्य सर्वे नागरिकास्तथा सभ्या जनास्तदीयतेजसा धर्षिता इवोत्थाय प्रणेमुः. वावदूकाः स्मार्तपण्डितास्तु तदीयं दिव्यं तेजो निरीक्ष्य सहसा दिनतारका इव निस्तेजस्का अभवन्. वैष्णवपण्डितानां मुखकमलानि तु तं तेजस्विनं द्वितीयं भास्करमिव प्राप्य पुनः सश्रीकाणि अजायन्त.

राज्ञा तथा सर्वैः सभ्यैः कृतस्वागतः स श्रीवल्लभो योग्यमासनमलंकुर्वाण एव सभ्यान्विषयमपृच्छत्. तदा मुख्यः सभापतिस्तदीयो मातुलो राजानुमत्या शिवोपासना वा श्रेयस्करी किंवा विष्णूपासनेति जगाद. तदानीमेव श्रीवल्लभो मेघनिनादानुकारिणा ध्वनिना—राजन् ! सभ्याः ! प्रथमतोऽस्य प्रश्नस्य प्रत्युत्तरणादुपासना किमर्थं क्रियत इति विचारणीयं. यथा हि बालकः साध्वक्षरविन्यासार्थं सम्यगक्षरप्रतिकृतिं पुरतः स्थापयित्वा तादृशान्येवाक्षराणि लिखितुं प्रयतते कतिपयदिवसैर्यशस्वी भवति च, तथैव दुर्गुणपरित्यागाय सद्गुणप्राप्तये च तादृशानामेवोपासना श्रेयस्करी येषु च सद्गुणानां परमप्रकर्षो दुर्गुणानां चांशतोऽपि सत्ता न स्यात्. निर्मले चेतसि यादृशं वस्तु आदर्शरूपेण पुरतः स्थापितं तदेव प्रतिबिंबति नान्यदिति सर्वेषामनुभवः. एवंस्थिते भूतप्रेतादिपरिवेष्टितस्य दिगम्बरस्य श्मशानवासिनो गरलपायिनो भुजङ्गभूषणस्य शिवस्योपासना श्रेयस्करी किंवा सकलानन्दकन्दस्य तैस्तैर्भागवतप्रतिपादितैः कर्मभिर्भक्तान् रक्षतो निखिलसद्गुणनिधेर्लक्ष्मीपतेरुपासना वा श्रेयस्करीति युष्माभिरेव विचारणीयं. सांसारिका जना यथा सर्वत्र सुखमेव वाञ्छन्ति न तथा वैराग्यं. बहवः खलु सांसारिका एव जना

भक्तिमार्गेण श्रेयःप्रति प्रापणीयाः. एवं च तादृशकठोरोपासनामपेक्ष्य श्रीकृष्णस्योपासना परमकल्याणकरीति बालोऽपि वदेत्. नच निर्धर्मके ब्रह्मणि उभयमप्येतदध्यस्तमिति को वा विशेष इति वाच्यं. ब्रह्मणः सधर्मत्वाङ्गीकारात्. ये गुणाः खलु नित्यानन्दादयोऽस्माभिरुपासनासमयेऽनुभूयन्ते ते सर्वेऽपि सत्या एव. अध्यस्तत्वे तु तेषामविश्वासप्रसंगः. उपासनोच्छेदप्रसंगश्च. तस्मादयमध्यासवाद उपासकानां न श्रेयस इति प्रत्युत्तरयामास.

इत्थं तस्य प्रत्युत्तरमाकर्ण्य सर्वे सभ्यास्तथा स्वयं भूपालस्तिमितोऽभवत्. स्मार्ताः पण्डिताः पराजयदुःखदग्धा अपि अपहृतप्रज्ञा न किंचिदपि प्रतिवक्तुं शेकुः. वैष्णवाश्च ह्यस्तनं पराजयदुःखं विस्मृत्यानन्दातिरेकेण ननर्तुः. राजा च तदीयेन दिव्यतेजसा समाकृष्टमना यथाविधि कनकाभिषेकं विधातुमाज्ञां गृहीत्वा सर्वां सभां व्यसर्जयत्. स्वयं च श्वोभाविनः कनकाभिषेकोत्सवस्य सामग्रीं संपादयितुं व्यग्रो बभूव.

( ३ )

द्वितीयदिने सर्वेऽपि विद्यानगरवासिनो जनाः कनकाभिषेकोत्सवं प्रत्यक्षीकर्तुमुत्सुकाः सत्वरं यथाकथंचित् स्वस्वकार्याणि विधाय राजप्रासादांगणे समागच्छन्. सर्वे राजसेवकाश्च स्वस्वाधिकारचिह्नानि धृत्वा व्यवस्थार्थं तत्र पूर्वमेव स्थिताः सर्वानपि प्रजाजनान व्यवस्थया स्थापयामासुः. तच्च राजप्रासादांगणं सुविस्तीर्णं चित्ररूपधारिणः पटस्य विशालेन वितानेनापनीतसूर्यातपं, स्थाने स्थाने निबद्धदीपभाण्डभासुरं, सुकोमलाम्रपर्णसंपादितापूर्वशोभं, सर्वतोनिबद्धसुरभिमालागंधमधुरं, स्वर्गस्य शोभामपाहरत्. अचिरादेव राजा

कृष्णदेवः प्रमुदितान्तःकरणकमलः सकलैश्वर्येण समं तत्स्थलमाजगाम. सोऽपि परमबलाढ्यश्चतुरङ्गसेनासमन्वितो मृत्युलोकेऽवतीर्णस्येन्द्रस्य भ्रममजनयत्. राजानं च समागतमवलोक्य सर्वेऽपि प्रधानामात्याः स्वस्वकर्माणि कथयन्तः सर्वसन्नाहं न्यवेदयन्. कृष्णदेवोऽपि स्वामात्यानां कर्मसु कौशलं वीक्ष्य सन्तुष्टः समागतकल्पामभिषेकवेलामवेक्ष्य चतुरङ्गसेनासमनुगतां पण्डितैस्तथा तदीयेन पुरोधसा सह महतीं शिबिकां श्रीवल्लभस्यानयनाय प्रेषयामास.

श्रीवल्लभोऽपि सर्वमाह्निकं विधाय भगवदाज्ञां गृहीत्वाऽनन्देन शिष्यैः संलपन्नेवातिष्ठन्. तं च ते सर्वेऽपि पण्डितास्तथा प्रधानामात्याः प्रणम्य राजविज्ञापनां कथयित्वा शिबिकायां स्थातुं विज्ञापयामासुः. स्मेरमुखः श्रीवल्लभस्तदीयां विज्ञप्तिमाकर्ण्य जगाद. राजपुरुषाः ! योऽयमतीते दिने मया विजयः संपादितो यश्चाद्य कनकाभिषेको मे भविष्यति स न मम. किंतु सर्वजगच्चालकस्य परमात्मनो वैकुण्ठनाथस्य. तदीयकृपयैव मया ह्यः किंचिदुक्तं. तत्तं विहाय कथं शिबिकां दूषयिष्यामि. स एव नः सर्वेषां प्रभुः. तत्स्वयं भगवान् शिबिकायां तिष्ठेत्. वयं सर्वेऽपि तदीयाः सेवकाः पद्भ्यामेवाभिषेकस्थानं गच्छाम इति.

वाचकाः ! पश्यत भगवद्भक्तेर्माहात्म्यं ! एतादृशमपूर्वं शैवपण्डितविजयरूपं कार्यं कृत्वाऽपि महाभागवतः श्रीवल्लभो भगवत्कृपामेव तत्कारणं मन्यते नात्मानं. वयं च स्वल्पतममपि कार्यं विधायाखर्वगर्वभारं धारयामः. भगवद्भक्ताश्च प्रथमं सकलनाशकारणमिमं गर्वसंभारं न धारयन्ति. एतदेव तत्वज्ञानं नाम. यो हि मानवश्रेष्ठो जगति विविधलोकोपयोगिकर्मकार्यपि आत्मानमकर्तारं मन्यते तमेव

नरवीरं शास्त्राणि ज्ञानिनं वदन्ति. बान्धवाः ! एपैव भगवत्कृपा नाम यत्प्रथमं गर्वस्यास्पर्शः. अनया भगवत्कृपया परं गोपितास्ते ते भक्तप्रवरा लोकोत्तराणि कार्याणि कुर्वन्ति न वयमिति तु तत्वम्. अस्तु. ते च सर्वेऽपि तत्र मिलिताः पण्डितास्तथा राजपुरुषाः श्रीवल्लभस्य भगवद्भक्तिं तथा विनयातिरेकं चावेक्ष्य सन्तुष्टा विस्मयसागरे निमज्जन्तः किमपि न प्रत्यवदन्.

अथ समीपमागतामभिषेकवेलां पुरोधसा निवेदितां निशम्य श्रीवल्लभः स्वयमेवोत्थाय भगवन्तं मदनमोहनं शिबिकायामस्थापयत्. तदानीं वाद्यानां घोषस्तुमुलो बभूव. ततः स्वमातृचरणौ प्रणम्य समागते तस्मिंस्ते शिबिकावाहकाः शनैः शनैः सुरमणीयेन मुख्येन राजमार्गेण राजप्रासादं गन्तुमारभन्त.

सर्वेऽपि विद्यानगरवासिनः पौरास्तथा तदङ्गनाः श्रीवल्लभस्य रमणीयां मूर्तिमालोक्य विस्मिता आनन्देन तदुपरि पुष्पाणि चिक्षिपुः. सीमन्तिन्यश्च स्थाने स्थाने नीराजनान्यकुर्वन्. एवं सर्वतो मानं लब्ध्वा श्रीवल्लभः शीघ्रमेवाभिषेकस्थानस्य पुरतः समाजगाम. तं च समीपमागतमाकर्ण्य राजा कृष्णदेवः सर्वैः स्वसामन्तैः सम सत्काराय प्रत्युज्जगाम. अभिवंद्य च तदीयं पवित्रं चरणारविन्दं तस्मै सर्वाण्यपि राजचिह्नानि दत्वा स्वयमेकाकी तं भृत्यवदनुजगाम. श्रीवल्लभोऽपि सर्वं तदङ्गीकृत्य मृदुलकौशेयवस्त्राच्छादितेन पथा तं मण्डपं प्रविश्य सर्वैरपि सादरं सत्कृत उचिते महार्घे स्थाने समुपविवेश. राजा च चामरमण्डितहस्तः कदाचिद्व्यजनधारी भृत्यवत्तमसेवत.

अथ श्रीवल्लभस्य संकेतं विज्ञाय शंभुर्नाम कुशाग्रमतिस्तदीयः

शिष्यः समुत्थाय सर्वानुच्चैर्जगाद. सभ्याः ! यत् खलु ह्यस्तने वादे परुपमन्यथा वा भाषितं स्यात्तत्क्षम्यतां. यच्चान्यदपि शंकास्थानं स्यात्तदपि कथयत येन तस्यापाकरणार्थं वयं प्रयतिष्यामह इति. निशम्य चेमां तदुक्तिं ते सर्वेऽपि पण्डितप्रवराः प्रत्यवोचन. आचार्याः ! यूयं खलु सत्यमेव तत्रभवतो भगवतो यशोदानन्दनस्यांशसंभूताः. अतएवेदृश्यल्पीयसि वयसि एतादृशो विद्यासंभारो विनयश्च. नैतत्सर्वं साधारणं. भवद्भिश्च परुपं नोक्तमेव परन्तु यद्युक्तमभविष्यत्तथापि तदस्माकं श्रेयस एवाभविष्यदिति अस्माकं दृष्टो निश्चयः. अस्तु. सम्प्रति काऽपि चिन्ता न करणीया. विद्याविलासिना विद्वदादरपरेण विद्यानगराधिपतिना चिकीर्षितं कनकाभिषेकं प्रति भवन्त एवार्हा इति वयं सर्व ऐकमत्येन वदाम इति.

इदं च सर्वेषां सभ्यानां स्मार्तपण्डितानां प्रोत्साहकं वाक्यमाकर्ण्य सन्तुष्टो राजा कृष्णदेवोऽभिषेकवेलां समागतामवलोक्य स्थण्डिले स्थातुं तान् विज्ञापयामास. ते च वल्लभाचार्याः शिष्यमण्डलीसमेतास्तं मदनमोहनमादायाभिषेकार्थं स्थण्डिलेऽतिष्ठन्. ततः प्रावर्तत यथाविधि अभिषेकमहोत्सवः. राजा कृष्णदेवः प्रथमं सुतीर्थानीतैः सुगन्धिभिर्जलैः स्नापयित्वा कौशेयवस्त्रधारिणो गोपीचन्दनतुलसीमालालंकृतांस्तान् वल्लभाचार्यान् कनकमये सिंहासने स्थापयामास. तदानीं सर्वेऽपि दामोदरप्रमुखाः श्रीमदाचार्यशिष्याः सर्वाण्यपि राजचिह्नानि धारयामासुः. श्रीमदाचार्यैरलंकृते कनकमये राजसिंहासने पुरोहितेन चोदितः कृष्णदेवस्तान् गन्धमाल्यादिभिः परिपूजयित्वा सुवर्णनिधिं दक्षिणारूपेणाग्रेऽस्थापयत्. प्रार्थयामास च मुकुलितहस्तयुगलो विनयावनतशिराः 'आचार्यश्रेष्ठाः ! भवद्भिः

स्वयमागत्य सर्वां पण्डितमण्डलीं निर्जित्याहमनुगृहीतः. न केवल-मेतावदेव किंतु अस्मिन् समये चिरंतन उपासनाविशेषविषयकः संशयोऽपि दूरीकृतः. अस्योपकारराशेरनुरूपमहं क्षुद्रो मानवः किं करोमि. केवलं कृतज्ञताप्रकटीकरणार्थमेष महोत्सवः कृतः. तदत्र समानीतानां सर्वेषां वस्तूनां स्वीकरणेनानुगृह्णन्तु मामिति विज्ञाप्य च भूमौ दण्डवत् पपात.

अथ श्रीमदाचार्यैः संकेतितः प्रगल्भवाक् दामोदरः समुत्थाय प्रत्युवाच. राजन् ! विनयशालिनः कुलीनस्यावनिपाकशासनस्य ते उचितैवेदृशी वाणी. क्षुद्राः खलु ऐश्वर्यं प्राप्य मदोद्धता भवन्ति न कुलीनाः तथापि सर्वेषां वस्तूनां ग्रहणं श्रीमदाचार्येभ्यो न रोचते. यतो निसर्गत एव निस्पृहाः श्रीमदाचार्या एतैर्वस्तुभिः किं कुर्युः. अथ यदीदं भवते न रोचते तदा सर्वाणीमानि रजतभाण्डानि तथा दक्षिणात्वेन दत्तः सुवर्णनिधिरत्र समागताय विद्वत्समुदायाय विभज्य देयः. धर्मशाला तडागादिकमपि यदि शक्यं तदा कर्तव्य-मेवेति. तमिममपूर्वं निःस्पृहतागुणं तदीयमवलोक्य सर्वेषु सभ्येषु विस्मयसागरे निमग्नेषु राजाऽपि यथाज्ञापयन्ति आचार्यचरणा इति निगद्य प्रणम्यातिष्ठत्.

तदानीमेव व्यासतीर्थप्रमुखाः विष्णुस्वामिसम्प्रदायानुयायिनो हरिस्वामिशेषस्वामिनोर्हस्ताभ्यामाचार्येभ्यः तिलकं कारयित्वा स्वय-मपि तथाऽकुर्वन्. तस्मिन्नेव क्षणे सुवर्णयष्टिधरः—श्रीवेदव्यासविष्णु-स्वामिसंप्रदायसमुद्धारसंभूतश्रीपुरुषोत्तमवदनावतारसर्वाम्नायसंचारवे-णवाम्नायप्राचुर्यप्रकारश्रीबिल्वमङ्गलाचार्यसाम्प्रदायिकाऽर्पितसाम्रा-ज्यासनाखण्डभूमण्डलाचार्यवर्यजगद्गुरुमहाप्रभव इति विरुदावलिमुच्चैः पपाठ.

निशम्य च तां विरुदावलिं सर्वेऽपि वैष्णवाः परमतुष्यन्. आकाशाच्च सर्वत्र दिव्यपुष्पवृष्टिरभूत्. स्वर्गे चाप्सरसां गणाः परमानन्देनानृत्यन. गोकुले च गोपालाः समं गोपीजनै रासक्रीडां व्यधुः. सर्वत्र होमाग्नयः प्रमुदिता इव प्रजज्वलुः. न केवलं मानवानामेव तदानीमानन्दोऽभवत्किंतु गावोऽपि अविरतं पयो भूमितले त्यजन्त्यः शुभानन्दं प्रकटीचक्रुः.

( ४ )

एवं विरुदावलिं प्राप्य स्वीकृताचार्यपदाः श्रीमदाचार्याः सर्वेभ्योऽपि सभ्येभ्यः पण्डितेभ्यो दक्षिणां वितीर्यानुग्रहं वांछते तस्मै नरपतये कृष्णदेवाय शरणाष्टाक्षरमन्त्रमुपदिश्य तुलसीमालां दत्वा तं कृतकृत्यमकुर्वन्. तस्मिन् समये बहवोऽन्ये जनाः श्रीमदाचार्याणां शिष्यत्वं लब्ध्वाऽऽत्मनो जन्म सफलं चक्रुः.

एवं कृष्णदेवकृतं कनाकाभिषेकं स्वीकृत्य श्रीमदाचार्याः स्वस्थानं गन्तुं तस्मात्स्थानान्निर्जग्मुः. राजा कृष्णदेवश्च यथापूर्वं स्वयं गृहपर्यन्तंताननुजगाम. श्रीमदाचार्याश्च स्वनिवासं गत्वा प्रथमं गोपालनन्दनस्य चरणारविन्दं नमस्कृत्य ततः स्वमातरं प्राणमन्. भगवती सकलजनवन्द्या माता इल्लमादेवी स्वपुत्रस्यैतादृशमलौकिकमुत्कर्षमवलोक्यानन्दसागरनिमग्नाऽभवत्. ततश्च सर्वानपि वृद्धजनान् प्रणम्य स्थितान् श्रीमदाचार्यान् कृष्णदेव आपृच्छ्य तद्दत्तां मालां शिरसि धारयन् स्वनिवासमगात्. मिलिता अन्ये जना अपि श्रीमदाचार्यगुणगणान् कीर्तयन्तः स्वस्वस्थानानि जग्मुः.

अथ सायंकाले माध्वमस्करी व्यासतीर्थः समागत्य विज्ञापयामास यद्यपि भवद्भिरद्य राजसभायां कनकाभिषेकसमये विष्णुस्वामि-

मताचार्यत्वं स्वीकृतं तथापि मदीयमप्याचार्यपीठमधिरुह्य यदि भवन्तो मामनुगृह्णीयुस्तदा सुमङ्गलं स्यादिति. श्रीमदाचार्याश्च तस्येमां विज्ञप्तिमाकर्ण्य स्मेरमुखाः प्रत्यवोचन. विद्वद्वर्य ! व्यासतीर्थ ! अहं हि सदा भगवदाज्ञामनुवर्तमान एवेह जगतीतले वसामि. अतीत एव दिने रात्रौ कस्य पीठस्याचार्यत्वमङ्गीकरणीयमिति विचारमग्नोऽहं भगवन्तं प्रार्थयित्वाऽपृच्छम्. भगवान द्वारकाधीशः स्वयमाविर्भूय मामवदन्—वत्स ! श्रीवल्लभ ! त्वं हि भक्तिमार्गस्य सर्वस्वं पुष्टिमार्गं जगति प्रसारयितुमिह मृत्युलोके संजातोऽसि. यद्यपि रामानुजादयोऽपि वैष्णवा मदीया भक्ता एवेति तैः प्रवर्तितान्मार्गानप्यहं भक्तिमार्गानेव वदामि. तथापि यथा पुष्टिमार्गे मदीया भक्तिस्तथा नान्यत्र कुत्रापि तस्मात्त्वं विष्णुस्वामिमताचार्यत्वं स्वीकृत्य जगति पुष्टिमार्गं प्रसारयेति. एवं भगवताऽऽज्ञप्त एवाहं प्रातःकाले विष्णुस्वामिमताचार्यत्वं स्वीचकार. तद्विरमाधुना वृथाऽस्मात्प्रयासात्. त्वमपि यथाशक्ति नानाविधानि भक्तिमार्गस्य प्रसाराय कार्याणि कुरु. इति.

सोऽपि तदिदं सर्वं वृत्तमाकर्ण्य लज्जितो न भूयः किमपि जगाद.

एवमाचार्यपदं लब्ध्वा प्रारब्धस्वावतारकार्याः श्रीमद्वल्लभाचार्याः संप्रदायप्रवृत्त्यर्थं यथानियमं महामन्त्रोपदेशग्रहणार्थं पर्युत्सुका उषसि स्नात्वा विहिताह्निककार्या ध्यानमार्गेण वृन्दावनस्थं योगिवर्यं बिल्वमङ्गलाचार्यं प्रार्थयामासुः. सोऽपि च तदर्थमेव धृतशरीरस्तस्मिन्नेव क्षणे तत्र प्रकटीबभूव. आचार्यचरणैः प्रणामादिभिः सत्कृतः साध्वासने समुपविष्टः प्रत्युवाच. वत्स ! वल्लभाचार्य ! अहं हि पूर्वमेव देवकीनन्दनेन सर्वमुपदिष्टः समयमेव प्रत्यपालयम्. अधुना त्वया

ध्यातः समागतः. त्वं ह्यस्य संप्रदायस्य रक्षार्थमवतीर्णोऽसीति अहं सम्यग्जानामि. तदस्य संप्रदायस्य पूर्वं वृत्तं शृणु. येनेमं प्राचीनं सम्प्रदायमुद्धर्तुं धृतस्तवोत्साहो वर्धेत.

पुरा खलु द्रविडदेशे पाण्ड्यो विजयनामा कश्चन परमधार्मिको भूपतिर्बभूव. तस्य च सकलशास्त्रसम्पन्नः सद्धर्माकरो विष्णुभक्तो देवस्वामी नाम पुरोहित आसीत्. तस्य पुत्रो विष्णोरवतारोऽयं विष्णुस्वामी नाम. स च पित्रा संस्कृतः सकलशास्त्रपारङ्गतोऽपि सर्वेश्वरं भक्तकल्पद्रुमं बालगोपालं बालवृत्त्या सिषेवे. आवर्षपर्यन्तं सततं सेवमानोऽपि भगवान यदा न तस्मा आत्मानमदर्शयत्तदा दुःखाकुलो भगवत्साक्षात्कारपर्यन्तं निरशनमेवावालम्बत. ततः सप्तमेऽह्नि तदीयं दृढनिश्चयं वीक्ष्य सन्तुष्टो भगवान वासुदेव आत्मानं दर्शयित्वा जगाद—वत्स ! विष्णुस्वामिन् ! किमर्थं खिद्यसे ! त्वत्कृता सर्वाऽपि सेवा मया स्वीकृता. इत ऊर्ध्वं त्वं भक्तिमार्गं लोके प्रसारय. सर्वे च वैदिका जना बौद्धैर्हिंसादोषेण दूषिते वैदिकधर्मे निराश्रया अन्धा इवेतस्ततः पर्यटन्ति. तानेनं सात्विकं भक्तिरूपं धर्मं बोधयित्वा सन्मार्गगामिनः कुरु. तथा शुकोक्तं भागवतमेव प्राधान्येनाश्रित्य तस्यैवाध्ययनरीतिं प्रचारय. व्याससूत्रार्थनिर्णयेऽपि व्यासमेव साक्षात्कुरु. स यथा वदेत्तथा वर्तस्वेति. निगद्य चैवं निजां मूर्तिं तथा रहस्यमन्त्रं दत्वा तिरोऽभूत्. सोऽपि च भगवन्तं साक्षात्कृत्य कृतकृत्यः स्वगृहे तां मूर्तिं प्रतिष्टाप्य कृष्णद्वैपायनं दिदृक्षुर्गन्धमादनपर्वतमाजगाम. तत्र वेदव्यासं प्रत्यक्षीकृत्य तेन समुपदिष्टं कृष्णशरणाष्टाक्षरमन्त्रं गृहीत्वा तुलसीमालां च जग्राह. ततश्च शुकाचार्येण समं मिलित्वा धर्मप्रसारार्थं निरगात्. सर्वत्र दिग्विजयं विधाय स महात्मा विष्णुस्वामी भागवतमिमं धर्मं सर्वत्र प्रासारयत्.

अथ तस्मिन् वैकुण्ठवासिनि सति क्रमेणानेके शिष्याः सप्तशताचार्या अभवन्. अन्तिमो मदीयो गुरुः राजविष्णुस्वामी नामाभवत्. स च द्वारकां गत्वा तत्र द्वारकेश्वरं स्थापितवान्. तस्माद्देशाच्च सर्वानपि बौद्धान्विद्रावयामास. ते च कपटशीलाः पुष्पपुराधीशसाहाय्यं लब्ध्वा मदान्धा विष्णुस्वामिशिबिरं व्यलुण्ठन्. सर्वाणि च पुस्तकान्यदहन्. तेन दुःखाकुलः स महात्माऽन्तेवासिनं मां सहसाऽऽचार्यपदेऽभिषिच्य वैकुण्ठं जगाम. अहमपि दुष्टानां तेषां तथा स्वकीयानामपि लिङ्गिनामुपद्रवेण दुःखितः कलिकालं वीक्ष्य मम स्थाने देवमङ्गलं निधायेह सदैव साक्षाद्भगवल्लीलादर्शनबद्धलालसो वृन्दावने तिष्ठामि. अहमपि एकदा विपरीतं कालं वीक्ष्य संजातनिर्वेदो भगवन्तं कंसारिं व्यज्ञापयम्—भगवन्! अस्मिन् घोरतमे कलौ नाहं स्थातुं वांछामि. तन्निजलीलालयं वैकुण्ठमागन्तुं ममाज्ञापयेति. मदीयां विज्ञप्तिं कर्णे कृत्वा स्मितभासुरवदनकमलो भगवान् राधारमणः सत्वरं प्रत्युवाच—वत्स! बिल्वमङ्गल! अहमपि जानामि तव चित्तवृत्तिं, तथापि मदीयभक्तजनोद्धारार्थं ममास्यावतारोऽग्निः श्रीवल्लभो भविष्यति. तदुपदेशार्थमत्र त्वं तिष्ठ. तस्मा उपदिश्य सर्वं सम्प्रदायवृत्तं ततः परं वैकुण्ठमागच्छेति. अहं तामिमामाज्ञां शिरसा धारयंस्तं समयं प्रतिपालयन् ब्रह्मसरसि महातरौ योगबलेन सप्तशतवर्षाण्यतिष्ठम्. तदधुना भवान् हरेराज्ञातो मत्तः संप्रदायं गृहीत्वा धर्मं प्रचारयतु. सफलयतु ममाऽपि चिरं धृतां वांछामिति.

एवं निशम्य सर्वमपि परमप्रियस्य भागवतसम्प्रदायस्य विस्मयकरं वृत्तं सन्तुष्टाः श्रीमदाचार्याः परमसंतोषेण ततोऽष्टादशाक्षरं

संप्रदायरहस्यं च गृहीत्वा प्रणम्य पुनः कृपया दर्शनं देयमिति विज्ञापयामासुः. बिल्वमङ्गलाचार्योऽपि स्वसम्प्रदायस्य रक्षकं तादृशं भगवदवतारं वीक्ष्य संजातानन्दातिरेकः सप्रमोदमाह—वत्स! श्रीवल्लभ! सम्प्रति कलिकाले तादृशी वेदकर्मसु मन्दमतीनां जनानां श्रद्धा न संभवति. दुष्करे योगमार्गे तादृशब्रह्मचर्यस्यासंभवात्प्रवृत्तिरेव न. एवंरीत्या सर्वतः प्रतिबद्धेषु प्राचीनधर्ममार्गेषु सांप्रतिका जना धर्महीना यथेच्छं वर्तमाना मानवजातिकार्यमतिवर्तन्ते. तदधुना यदि त्वमालस्यं विहाय सर्वसुलभस्य प्रेममयस्यास्य भक्तिमार्गस्य प्रसारं कुर्यास्तदा सम्यग्भवेत्. अन्यथा सनातनधर्मो दत्ततिलाञ्जलिः स्यात्. इति. सर्वं तदुक्तमङ्गीकृत्य श्रीमदाचार्या अपि प्रयागं गन्तुमिच्छुं तं बिल्वमङ्गलं प्रस्थापयामासुः.

---



# ७ द्विः पृथ्वीप्रदक्षिणा

१ कर्तव्यविचारः.

२ प्रथमपृथ्वीप्रदक्षिणायां कार्यं.

३ द्वितीयपृथ्वीप्रदक्षिणायामवशिष्टकार्यविधानं.

४ मतान्तरानुयायिनां स्वतेजसा धर्षणम्.

( १ )

एवं विल्वमङ्गलाचार्यान्मन्त्रं तथा रहस्यं च लब्ध्वा सन्तुष्टाः श्रीमदाचार्याः स्वयमचिन्तयन्. अहं चास्मिन्मृत्युलोके भक्तिमार्गस्य प्रसारणेन दीनोद्धारार्थं भगवता प्रेषितोऽस्मि. सम्प्रति हि मया स्वकार्यमवश्यमारंभणीयं. अधुना चेह भारते वर्षे प्रायः सर्व एव जना अव्यवस्थितचित्ता आलक्ष्यन्ते. पुराणः कर्मकाण्डिनां कर्ममार्गोऽपि क्वचित्क्वचित्प्रचलति. क्वचिच्च कर्मकाण्डप्रामाण्यनाशकानां तत्त्वज्ञानिनां मार्गा अपि जनान् स्वाभ्युपेतं ज्ञानमुपदिशन्ति. अन्ये च वैदिकहिंसायां बद्धद्वेषा बौद्धादयोऽधस्तान् दीनाञ्जनानन्यथा वदन्तः परिभ्रामयन्ति. सम्प्रति च चत्वारो वर्णाः केवलं नाम्नाऽवशिष्टाः परस्परद्वेषपराः सन्ति. राजानोऽपि महंमदीयाः स्वधर्मं प्रसारयितुमिच्छन्तो येनकेनापि कारणेन सनातनधर्मं नाशयितुमिच्छन्ति. न केवलं स्वधर्मोपदेशेन तथा ते कुर्वन्ति किंतु खड्ग-

साहाय्येन. ततो भीताः साधारणा जनास्तदीयमेव धर्ममनुसरन्ति. अस्मदीयाश्च रामानुजप्रभृतयो वैष्णवा लोके भक्तिमार्गं प्रसारयितुं प्रयतमाना अपि न तादृक् यशस्विनो भवन्ति. अत्र तु कारणं तेषां तत्त्वज्ञानन्यूनतैव. भेदसापेक्षमभेदं सर्वत्र वदन्तो भगवत्सेवामपि सापेक्षामेव वदेयुः. तेन लोके तेषां मतस्य प्रसारो न भवति. लोको हि निरपेक्षां भगवत्सेवां यथाऽऽदरयति न तथा सापेक्षां. तस्मादधुना मया सकललोकोद्धारं चिकीर्षुणा निरपेक्षसेवासिद्ध्यर्थं तत्त्वज्ञानमेव तादृशं निरूपणीयं. निरूप्य च ततः सर्वत्र निष्कामाया भगवद्भक्तेः प्रसारं विधातुं जनस्थितिरालोकनीया. यथा हि कृषीवलः क्षेत्रे बीजानां वपनात्पूर्वं तत्क्षेत्रं कीदृशं कीदृशबीजवापार्हमिति साक्षात्कृत्य निश्चिनोति तथैव लोकोद्धारं चिकीर्षुणा प्रथममवश्यं लोकस्थितिः प्रत्यक्षीकरणीया. तदर्थं पृथ्वीपर्यटनमावश्यकं.

किंच—यानि शास्त्रे पावनानि कर्माणि उक्तानि तेषु सर्वेष्वपि तीर्थयात्राऽधिकपुण्यप्रदेत्युक्तं. कारणं त्वत्र विविधकर्माशयशालिनां जनानामवलोकनेन तादृशविचारोद्भव एव. यो हि स्वगृह एव स्थित्वा जगतो मूलकारणं वा यच्चान्यल्लौकिकं ज्ञानं वा विचारयति स सदैव लब्धस्य विचारस्य प्रामाण्यं प्रति शंकत एव. तस्मान्निःसंदेहज्ञानप्राप्त्यर्थं तीर्थयात्राऽवश्यं कार्या. तदा यत्र नानाविधानि तीर्थानि सन्ति तस्याः पृथिव्याः पर्यटनं सफलमिति किमु वक्तव्यं.

अपिच—यथा हि वैद्यः समये समये रुग्णस्य धातुवैषम्यं निरीक्ष्य भिन्नानि औषधान्युपयुंक्ते तथैव लोकोद्धारतत्पराः साधुश्रेष्ठा अपि समये समये भिन्नां रीतिमालंबन्ते. तादृशभिन्नरीत्याश्रयणं

तु लोकपरिस्थित्यवलोकनं विनाऽशक्यमिति स्पष्टमेव. तस्मादधुना पृथ्वीपर्यटनमेवारंभणीयमिति.

विनिश्चित्य च पृथ्वीप्रदक्षिणां कर्तव्यत्वेन भूयस्ते विचारयामासुः—प्रथमतो दक्षिणापथयात्रैव करणीया तत आर्यावर्तस्य. दक्षिणापथे यथाऽन्येषामन्येषामुपासकानां मतान्तराणि विद्यन्ते न तथाऽर्यावर्ते. किंच दक्षिणापथेऽद्यापि तादृशो यवनसंबन्धो नास्ति यादृश आर्यावर्ते. तेन दक्षिणापथस्था जना अद्यापि उपासनादिकं कुर्वन्ति. विद्वांसोऽपि तत एव बहवो दक्षिणापथे. तेषु च भक्तिमार्गं प्रविष्टेषु अनायासेनैव साधारणा जनास्तं मार्गमनुसरिष्यन्ति. तस्माच्छीघ्रमेव दक्षिणापथयात्रार्थं गन्तव्यमिति.

( २ )

निश्चित्य चैवं ते स्वशिष्यमुखेन विद्यापुराधिपाय राज्ञे कृष्णदेवाय स्वगमनं कथयांबभूवुः. स चानिशं श्रीमदाचार्याणां सांनिध्यमाकाङ्क्षमाणः प्रवासवृत्तमाकर्ण्य मूर्ध्नि वज्रेण निहत इव सरभसमाचार्यचरणसन्निधिमागत्य साक्रोशमरोदीत्. श्रीमदाचार्या अपि तदीयामकृत्रिमां भक्तिमालोक्य सन्तुष्टा अनेकैरुपदेशवचनैः सान्त्वयित्वा न्यायेन प्रजाः पालयितुमादिशन्. उपादिशंश्च श्रीगोपालनन्दनस्य भक्तिं तथोपासनाविधिं च. सोऽपि विवेकावधूतशोकावेगः श्रीमदाचार्याणां कार्यगौरवं वीक्ष्य न किमपि प्रत्युवाच.

अथाचार्याः स्वप्रयाणवेलां शुभलक्षणान्वितां प्रमाणीकृत्य सर्वैः स्वशिष्यैः समं दक्षिणां दिशं प्रातिष्ठन्त. राजा कृष्णदेवः कियद्दूरं स्वयमागतः श्रीमदाचार्यैः समं रक्षणार्थं सादिमण्डलं प्रेषयामास. आचार्यचरणास्तु प्रथमतः सकलजनवंद्यं सर्वतो वर्तमानैर्निबिडवन-

राजिभिरलंकृतैः पर्वतैः संप्राप्तदिव्यश्रीकं, सततं क्रीडद्धंसमिथुन-चालितपद्मकोशनिपतितपरागभासुरं, अतिरुचिरनिर्मलजलं, परितो-वर्तमानेन सुगन्धिपुष्पलतानिकुञ्जपुंजेन मनोहरं, श्रीरामचन्द्रस्य परं पवित्रैश्चरणारविन्दैः पावितं, पंपासरः प्राप्य स्वावासमकल्पयन. तच्चैकान्तमयं हृदयाह्लादकं स्थलमवेक्ष्य सन्तुष्टाः श्रीमदाचार्यास्तत्र भागवतपारायणानि चक्रुः.

प्रथमत एव श्रुताचार्ययशस्तोमास्तत्रत्या जना आचार्यागमनं निशम्य नितान्तं मुदिता मधुकरा इव प्रफुल्लं सहकारं सहसा तत्राजग्मुः. भागवतपाठश्रवणेनात्मानं पावयामासुश्च. तस्मिन्नेव समये शीघ्रमेव मदीयावतारः श्रीवल्लभो नाम मुनिवर आगमिष्यति तं शरणं व्रजेति साक्षाद्भगवता समाज्ञप्तो घनकृष्णदासक्षत्रियः परमभागवतः श्रीमदाचार्यचरणाववन्दत. तमनुगृह्य श्रीमदाचार्या-स्तस्मै यष्टिधरकर्म भगवत आदिशन.

एवंरीत्या पंपासरसि भागवतपारायणे परिचलति सति एकदा कश्चन सुन्दरकायो हंसस्तृपार्तो नाम भूत्वा श्रीमदाचार्यचरणोदकं पातुं प्रायतत. परन्तु जनसंमर्दभीत्या स्वमनोरथं सफलयितुं नाशकत. तदेतत्सर्वं प्रत्यक्षीकुर्वन स कृष्णदासः कस्मिन्नपि भाण्डे आचार्य-चरणोदकं गृहीत्वा तेन तं प्रोक्षांचक्रे. तस्मिन्नेव क्षणे स हंसः पक्षितनुं विसृज्य दिव्यदेहधारी नाम भूत्वा प्रणम्याचार्यचरणान पश्यत्सु विस्मितेषु सर्वेषु प्रेक्षकजनेषु दिवमुत्पपात. इदं वृत्तं वीक्ष्य सर्वे जना आचार्यान भगवदवतारानेवामन्यन्त.

ततः कृतप्रस्थानाः श्रीमदाचार्याः क्रमेण ऋष्यमूकप्रभृतीनि तीर्थ-

स्थानानि पश्यन्तो व्यङ्कटाचलं प्राप्य तत्र भागवतपारायणानि चक्रुः. ततश्च काञ्चीचिदंबरादीनि क्षेत्राणि अवलोक्य दक्षिणद्वारकामाजग्मुः. तत्र च शुभस्थले स्थिता भागवतपारायणान्यारभन्त. समाप्तकल्पेषु च भागवतपारायणेषु तत्रस्था राघवाचार्यनामानः पण्डितवराः समागत्य वेदान्तचर्चामकुर्वन. तेषु तेषु च प्रश्नेषु समाहिता अन्तेऽवदन. सत्यमेव यूयं सकलशास्त्रनिष्णाताः सत्यमेव च यूयं भगवदवताराः. तथापि वेदपाठं विहाय किमिति पौरुषेयं भागवतं पठत ! यद्यपि एतद्भगवल्लीलामयं भागवतं साक्षात्सर्वज्ञकल्पेन मुनिना शुकेन विरचितं तथापि न सकलजनवन्द्यस्याज्ञातकर्तृविशेषस्य सकलज्ञाननिधेरसंभावितदोषलेशस्य वेदस्य प्रामाण्यमुपैति. तत्किं भागवतं वेदेभ्योऽपि श्रेष्ठमिति युष्माकं संमतमिति.

श्रीमदाचार्याश्च तेषां विद्योन्मादशालिनां कूटमिमं प्रश्नमाकर्ण्य स्मितभासुरकपोलाः सप्रमोदं प्रत्यवदन. पण्डितश्रेष्ठ ! सर्वेषां प्रमाणानां प्रामाण्यं खलु केन सिद्ध्यति तद्वद. त्वमपि यद्वेदप्रामाण्यं स्वीकुरुषे तत्केन प्रमाणेन ! यदि वदसि अहं तथा मन्य इति तदा त्वमात्मानमेव वेदापेक्षया प्रमाणत्वेन स्वीकुरुष इति प्राप्तमेव. एवंस्थिते यस्य दासस्येदृशं निरतिशयं प्रामाण्यं तस्य स्वामिनः परमात्मनः कीदृशं प्रामाण्यं स्यादिति त्वमेव चिन्तय. यो हि सर्वप्रमाणानां प्रमाणं ! यस्य कृपया सर्वाणि प्रमाणानि स्वस्वविषयं व्याप्रुवन्ति, तस्यैव त्रैलोक्यनाथस्य सच्चिदानन्दविग्रहस्य गोपालनाथस्य लीलावर्णनमयं भागवतं कथं प्रमाणमिति शंकमानः कथं पाण्डित्यगर्वं वहसि ! उन्मत्ता हि एवं पृच्छन्ति 'अहमत्रास्मि' इत्यत्र किं प्रमाणमिति न पण्डिताः. भागवतप्रामाण्यप्रश्नोऽपि अस्य प्रश्नस्यैव सादृश्यमावहति.

तद्विरमास्माद्धोगतिकारिणः पाण्डित्यगर्वात्. पाण्डित्यं हि कल्याणायाश्रयणीयं नानर्थाय. अन्नं हि जीवनार्थं भुज्यन्ते न मरणार्थं. इमं च पाण्डित्यगर्वं विहाय भवान् भागवतं पठतु. तत एव त्वं सद्गतिं लप्स्यस इति.

इममममृतोपमं श्रीमदाचार्याणामुपदेशमाकर्ण्य स राघवाचार्यः सद्यो विगलितपाण्डित्याभिमानः श्रीमदाचार्यचरणकमलयोर्मिलिन्दायमानो बभूव. सर्वे च जनाः श्रीमदाचार्याणां प्रभावं निरीक्ष्य विस्मिता नम्रा अभवन्.

आचार्याश्च ततो निर्गताः क्रमेण नानास्थानानि पावयन्तो रामेश्वरं क्षेत्रमाययुः. तत्र भागवतपारायणानि कृत्वा सर्वानपि भक्तान् संतोषयित्वा तोताद्रिमागच्छन्. तस्मिन् स्थले समागता लोकाः कृष्णदेवसभावृत्तान्तवर्णनायाचार्यपादान्विज्ञापयामासुः. ततस्तत्कथनार्थमाज्ञप्तः श्रीदामोदरः सर्वं वृत्तं न्यवेदयत्. तदाकर्ण्य विस्मितेषु जनेषु केचन मलिनचेतसो जनाः श्रीमदाचार्याणां भगवदवतारत्वेऽशंकन्त. तेषामिमामाशंकामपनेतुं लोकोपकाराय च निर्जले तस्मिन् स्थले महान्तं निर्झरमुत्पादयामासुः. अकस्मादेव विपिने निर्गतं तं जलप्रवाहमवेक्ष्य विस्मितास्ते सर्वेऽपि लोकाः श्रीमदाचार्यान् भगवदवतारानेवामन्यन्त.

ततः क्रमेण पर्यटन्तः पद्मनाभक्षेत्रं प्रति श्रीमदाचार्या आययुः. तत्र च निवासं परिकल्प्य यावत्ते भागवतपारायणमारभन्ते तावदेव श्रुतकीर्तिस्तद्देशाधिपः स्वयमागत्य दण्डवत्प्रणम्याधोवदनस्तूष्णीमतिष्ठत.

राज्ञो यूनोऽपि मुखकमले तादृशं दैन्यमवलोक्य विस्मिता आचार्यास्तत्कारणमपृच्छन्. स तु मुकुलितहस्तकमलः सकष्टं प्रत्युवाच. सकलजगदुद्धारकाः! आचार्यचरणाः! अहं हि लौकिकेन सर्वेणाऽपि सुखजातेन परिपूर्णकामोऽस्मि. बाल्ये च पिता मां सम्यगशिक्षत. ततश्च यौवनेऽनुरूपां कल्याणगुणाकरां पत्नीमप्यहमलभे. स्वामिभक्तसचिवायत्तराज्योऽहं तया सह साधारणजनैरलभ्यानि सुखान्यन्वभवम्. एवं प्रयाते कियति काले मम दुरितसंचयेन वा सुकृतक्षयेण वा सा मे कान्ता केनचिद्बलवता ब्रह्मराक्षसेनाधिष्ठिता बलवतीं वेदनामन्वभवत्. तस्याश्च वेदनाजातं द्रष्टुमप्यशक्नुवानोऽहं राज्यव्ययेन प्राणदानेन वा तदपनोदाय प्रायते परन्तु स्वल्पमपि यशो नालभे. बहवो मांत्रिकास्तथा वैदिका वैद्या अन्ये चासाधारणा जनास्तं ब्रह्मराक्षसं निष्कासयितुं प्रायतन्त परन्तु ते सर्वेऽपि वृथापरिश्रमा अजायन्त. तेन चोदासीनः स्वजन्म विफलं मन्वानोऽहं युष्माकमागमनमशृण्वम्. यदि किंचित्स्वल्पमपि मे सुकृतं स्यात्तदा भवतामनुग्रहो भवेत्. यदि तु नैवं स्यात्तदा वृथा भारभूतानिमान् प्राणांस्त्यक्ष्यामीति. निगद्य चेत्थं व्याकुलमनाः पुण्डरीकविशदाभ्यां नेत्राभ्यां प्रभूतं जलमुत्ससर्ज.

दयासागराः श्रीमदाचार्याः सर्वं तद्वृत्तं निशम्य करुणया व्याप्ताः केवलं दामोदरस्य मुखमवलोकयामासुः. सोऽपि ज्ञाताभिप्रायः श्रीमदाचार्यचरणोदकं गृहीत्वा तेन राज्ञा समं तस्या ब्रह्मराक्षसाधिष्ठिताया राज्ञ्या निवासमागच्छत्. श्रीमदाचार्यशिष्यं दामोदरमागच्छन्तमवेक्ष्य स ब्रह्मराक्षसोऽत्यन्तं दुःखाकुलः क्रुद्धश्च परं तमभीषयत्. परन्तु सद्गुरुकृपाच्छत्रशाली निर्भीकः स द्वित्रानेव तदुदकबिन्दूंस्तस्याः शरीरेऽपातयत्.

तस्मिन्नेव क्षणे प्रबलमांत्रिकैरपि अयापितः स प्रबलो ब्रह्मराक्षसस्तस्या राज्याः शरीरान्निर्गत्य मनोहररूपधारी गन्धर्वो नाम भूत्वा दामोदरं नमस्कृत्य स्वर्गलोकमगच्छत्. सा च राज्ञी सुप्तोत्थितेव प्रकृतिस्था पूर्ववदेव बभूव. स तु भूपाल इदं सर्वं प्रत्यक्षीकृत्याश्चर्यसागरनिमग्नस्तया सहाचार्याणां समीपमागत्य प्राणमत्. अस्तौच्च. अनुग्रहं च लेभे.

ततः क्रमेण नानास्थानानि परिचरन्तः श्रीमदाचार्या नर्मदातीरमागच्छन. तत्र रमणीये नानातरुवरनिषिद्धसूर्यकिरणप्रवेशे स्थले निवासं परिकल्प्य भागवतपारायणान्यारभन्त. श्रोतारोऽपि गुर्जरदेशवासिनः समागताः श्रद्धया भगवल्लीला अशृण्वन्.

एवंवृत्तेषु केषुचिद्दिवसेषु एकस्मिन्दिने स्वल्पमुदिते भगवति प्रभाकरे सर्वेषु भक्तजनेषु भागवतपाठमाकर्णयत्सु सत्सु अकस्माद्भयविह्वलत्रासचञ्चले नयने सर्वासु दिशासु प्रक्षिपन् घर्माविलाङ्गः श्वासातिरेकविवृतमुखः कोऽपि मृगशावकः सरभसं तत्रागत्य श्रीमदाचार्यचरणसमीपेऽतिष्ठत्. तं कम्पमानमवलोक्य दयाकुलाः श्रीमदाचार्या अपि तं प्रेम्णा करतलस्पर्शेन सुखयामासुः. तदानीमेव विकरालचापमण्डितहस्तः कश्चन तदनुसारी व्याधस्त्वरया तत्रैव समाजगाम. तं च व्याधमायान्तं दूरादेवावलोक्य भयेन कम्पमानः स मृगशावकः श्रीमदाचार्याणां वस्त्रान्तः प्रविवेश. स च व्याधः श्रीमदाचार्यचरणानवेक्ष्य तस्मिन्नेव क्षणे तद्धीनं स्वरूपं हित्वा राजपुत्रोऽभवत्. प्रणम्य विज्ञापयामास. भगवन्! अहमस्मि जन्मना क्षत्रियो विशालराजस्य पुत्रः. बाल्ये च कुजनसंगत्या दुर्वृत्तो वेश्यासक्तोऽभवम्. ततः क्रमेण वर्धमानकामः कदा-

चित्कस्यचिद्विप्रस्य कन्यां बलात्परामृश्यम. तेन कुपितः स ब्राह्मणो मां व्याधो भूत्वा चरेति शशाप. अहमपि शत्रुहृतराज्यो व्याधो भूत्वा वनं चचाल. तस्मिन् समये संजातोपतापः स एव विप्रो मां प्रत्यवोचन्—राजपुत्र ! यदा खलु जगतीतले भक्तिमार्गोपदेशाय समवतीर्णान् श्रीमद्वल्लभाचार्यांस्त्वं साक्षात्करिष्यसि तदा पुनरपि त्वं स्वरूपं तथा स्वराज्यं लप्स्यस इति. सोऽयं समयश्चातकेन मेघकाल इव मया चिराल्लब्धुं वांछितोऽद्य लब्धः. इदानीमहं केवलं युष्माकं सेवक इति. श्रीमदाचार्याश्च तमनुगृह्य न्यायेन राज्यपालनाय विससर्जुः. तस्मै तं मृगशावकमपि वितेरुः.

एवं दक्षिणयात्रां समापयित्वा पुष्करप्रभृतितीर्थराजमण्डितस्य मध्यप्रदेशस्य यात्रां चक्रुः. ततः पश्चिमयात्रां विधाय द्वारकादिक्षेत्राणि अवलोक्य तत उत्तरयात्रामारभन्त. तत्र च यमुनोद्भवस्थानं तथा बदरिनारायणप्रभृतीन्यलौकिकवनश्रीदर्शनीयानि स्थानानि निरीक्ष्य सन्तुष्टा अगणितशिष्यमण्डलीसमेताः पूर्वयात्रामारभन्त.

तत्र प्रारंभे काशीयात्रां विधाय शिवगयायां समागता निवासमकल्पयन. तस्मिन समये कश्चन तद्देशीयो भूपः श्रीमदाचार्याणां समीपमागत्य दण्डवत्प्रणम्योवाच. मुनिवर ! कुतोऽपि कारणान प्रेतो मे भ्राता मद्भार्यां न मुञ्चति. बहवो मांत्रिका मया तन्निष्कासनार्थं प्रयुक्तास्तथापि स न प्रयाति. केषांचिद्वैदिकानामुक्तयाऽहमष्टकृत्वः शिवगयायात्रामकार्षं तथापि न गुणो दृश्यते. तदधुना मदीयां भार्यामस्माद्दुःखान्मोचयन्तु गुरुचरणा इति. तस्मिन क्षणे समीपवर्ती कृष्णदास आह—स प्रेतः कदाऽगमिष्यति ! यदाऽगमिष्यति तदाऽहं बोधनीय इति. मुहूर्तानन्तरं स प्रेत आगत इति

तेन भूपेन निवेदिते कृष्णदासो गुरुचरणोदकं गृहीत्वा तत्स्थलमाजगाम. सा च वराकी तं क्रूरमागतं प्रेतमवलोक्य रक्षरक्षेत्युच्चैराक्रोशन्ती रुरोद. तदानीं कृष्णदासस्तं प्रेतमुद्दिश्याह—प्रेत ! किमिमां वृथा कदर्थयसि ! किं तेऽभिलषितं. यदि बलोन्मादाद्वृथा पीडयसि तदेदं सकलपीडानाशकं दीनपालकं चरणोदकं पश्येति. दर्शितवांश्च तस्मै. सोऽपि तत्प्रभावं जानन् दीनवृत्त्या प्रत्युवाच—भगवन् ! अहं जानाम्यस्य चरणोदकस्य माहात्म्यं. एतत् खलु भक्तिमार्गप्रसारार्थं मृत्युलोकेऽवतीर्णानां विष्ण्वंशावताराणां श्रीवल्लभाचार्याणां चरणोदकं. तथाप्येनामहं न वृथा पीडयामि. एष हि मे कनिष्ठो बन्धुः. अयं च मदीयं पुत्रं निहत्य राज्यमाक्राम्यत्. तत एवाहमपि क्रुद्धोऽस्य पुत्रान्निहत्य भार्यामपि नाशयितुमिच्छामीति. इदं च प्रेतस्य प्रतिवचनं निशम्य खिन्नः कृष्णदास आह. अधुना वृथा पीडनेन किं ! न तवास्ति कश्चन तनयः. तदस्य क्षणभंगुरस्य राज्यस्य कृते तुभ्यं वैकुण्ठलोकः प्रदीयते. तद्गच्छ विष्णुलोकं शाश्वतसुखलाभायेति. निगद्य चेत्थं तस्या जडे शरीरे श्रीमदाचार्यचरणोदकबिन्दून्द्वित्रानपातयत्. तस्मिन्नेव क्षणे स प्रेतो दिव्यशरीरधारी भूत्वा वैकुण्ठं जगाम. भूपोऽपि प्रकृतिस्थया स्वभार्यया समं श्रीमदाचार्यचरणयोर्मिलिन्दायमानो बभूव. एवंरीत्या काशीयात्रां विधाय मणिकर्णिकायामेकदा स्थितानाचार्यचरणान् प्रणम्य श्रेष्ठिकृष्णदाससुतः पुरुषोत्तमदासः प्राह. मम हि पिता युष्मद्दर्शनाकांक्षी चिरं स्थित्वा विष्णुलोकमगच्छत्. अहमपि तथैव युष्मदागमनं प्रतिपालयामि. तत्कृपया भवच्चरणसरोजधूलिनिक्षेपेण मदीयं गृहं पवित्रीक्रियतामिति.

श्रीमदाचार्या अपि पैतृकं कृष्णदासश्रेष्ठिनः स्नेहं मनसि कृत्वा तद्गृहं गत्वा तस्मै मदनमोहनमूर्तिं ध्यानाय विसृज्य स्वयमग्रे तीर्थयात्रार्थं प्रातिष्ठन्त.

एवं पूर्वयात्रामपि विधाय समस्तभारतप्रदक्षिणां कृत्वा स्थाने स्थानेऽलौकिककार्यविधानेन सकलजनचेतांस्याकर्षयन्तः कृष्णाष्टाक्षरमंत्रं योग्येभ्यः समुपदिशन्तः श्रीमदाचार्यचरणा नवभिर्वर्षैः स्वस्थानं प्रत्याजग्मुः. तांश्च प्रत्यागतानवलोक्य सर्वेऽपि संबन्धिनस्तथा ग्रामवासिनः परमोत्सवं चक्रुः. समग्रभूतलप्रसृतं सुधांशुधवलं श्रीमदाचार्याणां यशो निशम्य विस्मितास्तान भगवदवतारानमन्यन्त. एवं सर्वां पृथ्वीप्रदक्षिणां विधाय प्रत्यागतानाचार्यानवलोक्य सादरं माता इल्लमादेवी तानपृच्छत—वत्स श्रीवल्लभ ! कथं त्वया पृथ्वीप्रदक्षिणा कृता ? कथं च मार्गे चरितार्थः कृतः ? कथं च भगवान् गोपालनन्दनः सेवित ? इति मां कथय. येनाहमपि सन्तोषभाक् स्यामिति. श्रीमदाचार्या अपि अनेन मातृप्रश्नेन सन्तुष्टाः प्रत्यूचुः— मातः ! तेषु तेषु प्रधानक्षेत्रेषु गतोऽहं यथाविधि तांस्तान्वैदिकान्विधीनकार्षम्. सर्वत्र ये ये भक्तगणा आगतास्तेभ्यः श्रीगोपालोपासना निवेदिता. मार्गे च सर्वदा शरीरपोषणं वन्यैर्धान्यैः फलैः कन्दैश्च कृतं. मार्गे च यत्र यत्र चौराद्वा पापिभ्यो वा भयं प्राप्तं तत्र सर्वत्राहं भगवतैव रक्षितः कैश्चिच्च शिष्यैरपि. भगवान् यशोदानन्दनश्च सर्वत्र स्वनिर्विशेषं सेवित इति.

निशम्य च स्वपुत्रस्य पृथ्वीप्रदक्षिणावृत्तं माता इल्लमादेवी परमतुष्यत्. अस्तौच्च तादृशपुत्रवरलाभेनात्मानं. प्रार्थयामास च तस्य

चिरजीवनाय परमात्मानं. आचार्यचरणा अपि किंचित्कालपर्यन्तं प्रवासप्रयासापनयनाय तत्रैवावसन.

अथापनीतकल्पेषु प्रवासपरिश्रमेषु श्रीमदाचार्या मनसि विचारयामासुः. प्रथमपृथ्वीप्रदक्षिणासमये तु सर्वाऽपि लोकस्थितिर्निरीक्षिता. साम्प्रतं च परकीययवनादिभूपालैर्निःसत्त्वीकृता भारतवासिन उदरभरणार्थं सततं प्रयतमानाः क्लेशैर्जीवन्ति. तेन अधुना निसर्गत एवातिकठिनस्य कर्मकाण्डोक्तमार्गस्याचरणे तेऽनुत्सुका एव. ज्ञानमार्गस्तु न साधारणजनानां कृते सुखावहः एतावदेव न किंतु अनर्थावहश्च. अशुद्धसत्वा विचारयितुमक्षमा जना ज्ञानमार्गमालंब्य न केवलमात्मानमेव घातयन्ति किंतु अन्यानपि. अयोग्या अनधिगततत्वास्ते ज्ञानाभिमानशालिनो यथेच्छं यत्किंचिदप्युपदिशन्तः संसारं व्याकुलयन्ति. तस्मात् सम्प्रति भक्तिमार्गस्य प्रसार एव श्रेयान् स्यात्. प्रथमप्रदक्षिणासमये च प्रायः सर्वेषां लोकानां विश्वासः संपादित एव. लोकविश्वासो हि सर्वेषामपि लौकिकानां कार्याणां मूलं. लोकोद्धारो हि लौकिकमेव कार्यं. तदधुना पुनरपि द्वितीयां पृथ्वीप्रदक्षिणां विधाय स्थाने स्थाने शिष्यसंघाः स्थापनीयाः तथैव यत्रकुत्रचिन्मुख्यं गोपालनाथस्य स्थानं विधाय तदनुगामीनीतराण्यपि देवालयानि विधेयानि. एवंकृतेऽयं भक्तिमार्गः सुप्रतिष्ठो भवेत्. अन्यथा यावदहं जीवामि तावदेव यथाकथंचिद्वर्तमानः सुरक्षितोऽपि सुवर्धितोऽपि सकलमानवकल्याणसमर्थः कल्पद्रुम इवायं भक्तिमार्गो नामशेषो भवेत्. यस्मिन् धर्मपथे सज्जना भक्तगणा अधिकाः स्युस्तावत्कालं स धर्मपथश्चिरंजीवी भवति. तदधुना प्रथमं द्वितीयां पृथ्वीयात्रां विधाय भक्तगणाः संपादनीयाः. वस्तुतस्तु

यथा मेघकाले समुदितं नीलं नीरदं विलोक्य समुत्कण्ठिता बलाकाः परमामोदेन परिवारयन्ति तथैव युक्तं सदाचारपरं परहितदक्षं मानवं जनाः. अस्तु. ततश्च शीघ्रमेव दक्षिणापथयात्रा समारंभणीयेति. विचार्य चैवं ते सकलमानवगणकल्याणार्थमवतीर्णाः श्रीमदाचार्याः प्रथमं मंगलप्रस्थमागत्य तत्र नानाविधविपद्ग्रस्तान जनान् भक्तितत्वोपदेशेनानुजगृहुः. ततो विशालहृदयकमलाः श्रीमदाचार्याः श्रीवेंकटनाथं साक्षात्कर्तुं वेंकटाचलं गन्तुं प्रातिष्ठन्त. मार्गे च सर्वत्र प्रसृतं श्रीमदाचार्याणां यशःस्तोममाकर्ण्य भृंगा इव प्रफुल्लं पारिजातं श्रीमदाचार्यचरणान द्रष्टुं सांसारिका जना आययुः. वीक्ष्य च दिव्यां नयनरमणीयां तपोऽतिरेकभासुरां श्रीमदाचार्यपादानां मूर्तिं स्वजन्मनः साफल्यमलभन्त. कतिपयदिवसैर्वेंकटाचलं प्राप्य तत्र लक्ष्मीनाथं साक्षात्कृत्य संजातसंतोषाः श्रीमदाचार्यास्तत्रैव कानिचिद्दिनानि अवसन. तत्रापि शिष्यगणं संपाद्य क्रमेण नानातीर्थक्षेत्राणि वीक्ष्य रामेश्वरं नमस्कृत्य प्रतिनिवृत्ता विद्यानगरं प्रत्यागच्छन.

तत्र च निवसतामाचार्यचरणानामलौकिकं भक्तगणगीतं यशो निशम्य संजातदर्शनकुतूहलः कायस्थवंश्यो नारायणदासो नाम पुरुषो निवसतिस्म. स च पूर्वजन्मसुकृतसंचयेन संजातवैराग्यो यं कमपि पुरुषवरमाश्रित्य स्वजन्म सफलयितुमिच्छन् तादृशं दिव्यं पुरुषमन्वेषयतिस्म. स च समागतानाचार्यचरणान्निशम्य संजातसन्तोषः सहसा तदावासं गत्वा तानवलोक्य समुत्पन्नश्रद्धातिरेकः सानन्दं तदीयचरणारविन्दे मिलिन्दायमानो बभूव. उवाच च—भगवन्! अयं जनः परमप्रखरसंसारदावानलज्वालानिदग्धः कथं कथमपि जीवति. यथा च चातको ग्रीष्मरविकिरणसन्तापं

वर्षाकालमेघागमनं प्रतीक्षमाणः कथमपि सहते तथैवायमपि क्षुद्रो जन इमं संसारतापं. तत्सकलजनकल्याणविधानतत्परैराचार्यचरणै-रनुगृह्य कथमपि अस्मात् दुःसहात्संसारतापादहं मोचनीय इति. श्रीमदाचार्यपादा अपि सत्यमेव तस्य नारायणदासस्य करुणामयं वैराग्यप्रदर्शकं स्तवमाकर्ण्य संजातकृपालवाः शीघ्रमेव तमन्वगृह्णन्. सोऽपि तदुपदेशामृतं भवसरीसृपगरलशामकं पर्याप्तं निपीय शान्त-चेताः पुनरपि परस्परद्वेषजालजटिले गृहस्थाश्रमे स्थातुमनिच्छन् सविनयमाचार्यचरणान्विज्ञापयामास सहावस्थानाय. तेऽपि तदीयं भगवति श्रीनाथेऽनुरागविशेषमालक्ष्यान्वमोदन्त. ततस्तेन समं भीमातीरमागतास्तत्र विठ्ठलेशं प्रणेमुः. विठ्ठलेशश्च स्वयमाविर्भूय श्रीआचार्यचरणानवदत् सन्तुष्टोऽहं भवदीयया सेवया. अधुना भवद्भिरिमां द्वितीयां पृथ्वीयात्रां समापयित्वाऽवश्यं गृहस्थाश्रमः स्वीकर्तव्यः. यतोऽहमेव पुनराधिक्येन भक्तिमार्गप्रसारार्थं युष्म-दुदरात्प्रादुर्भवितुमिच्छामीति. इमां च भगवदाज्ञां निशम्य खिन्ना-अपि सानन्दा आचार्यचरणाः क्रमेण नर्मदातीरस्थानि तीर्थानि वंदमाना गुर्जरदेशमाययुः. वाचकाः ? तस्मिन समयेऽज्ञानग्रस्ताः प्रायः सर्व एव गुर्जरदेशवासिनो जिनधर्मानुयायिनः सनातनध-र्मस्य नामापि नाजानन. तामिमां तेषां दीनावस्थामवलोक्य कृपालवः श्रीमदाचार्यचरणास्तत्र कतिपयमासानुषित्वा सर्वेभ्यो गुर्जरदेशवा-सिभ्यो भगवतो देवकीनन्दनस्य भक्तिमुपादिशन्. सततं भगवदा-राधनलब्धसुकृतसंचयाः साक्षादग्निरूपा आचार्यपादाः शीघ्रमेव तान् गुर्जरदेशवासिनो जनान् तुलसीमालालंकृतकण्ठान् भागवतप-ठनदक्षान् भक्तशिरोमणीनकार्षुः. योऽयं गुर्जरदेशः पुरा सर्वत्र

जैनमन्दिरैर्व्याप्तो मुण्डिभिश्च संकुलो न सनातनधर्मोऽनुयायिनां मनांस्यानन्दयन्, सोऽयमधुना सर्वतः सुवर्णशिखरमण्डितैरपारधेनुकुलभूषितैर्भक्तगीतस्तोत्रमुखरैः श्रीकृष्णदेवालयैर्भूमिगतः स्वर्ग इवावाभासत. पाठकाः! अधुनाऽपि यूयं मथुरापुरीं गतास्तत्र श्रीयशोदानन्दनस्य दर्शनार्थं प्रतिदिनमागच्छतां प्रवासिनां मध्ये गुर्जरानेव बाहुल्येन पश्येत! सोऽयमाचार्यचरणानामेतेषामेव प्रभावः. अस्तु. प्रकृतमनुसरामः.

एवं गुर्जरदेशवासिनः सनातनधर्मानुयायिनो विधाय ते सुदामपुरमागत्य कपूरसुदामबालनामानं शिष्यं गृहीत्वा स्थाने स्थाने शिष्यानसंख्यान्विधाय हिमाचलं प्रविश्य वदरिकाश्रमस्थं नारायणं प्रणम्य व्यासाश्रममगच्छन. तत्र च तपस्यन्तं बिल्वमंगलं प्रणम्य तदाज्ञया श्रीव्यासं कतिपयविषयेषु संशयानपृच्छन. व्यासदेवोऽपि सर्वानपि संशयान्निराकृत्य जगाद. अस्मिन कलियुगे हरिभक्तिं विना नान्यत्किमपि अहं शरणं पश्यामि. तत्त्वमितो गत्वा हरिभक्तिं प्रवर्तय. तदर्थं सिद्धान्तग्रंथान् प्रणय. प्रतिपक्षान् निवारय. भगवदाराधानाया अविच्छेदाय गार्हस्थ्यमधितिष्ठस्वेति. श्रीमदाचार्याश्च ततो निर्गत्य क्रमेण प्रयागादीनि क्षेत्राणि पश्यन्तो वाराणसीं समाययुः श्रीमत आचार्यपादान् काशीमागतान्निशम्य तत्र नानादेशेभ्यो भक्तगणाः सहसाऽऽगच्छन. अशोभत च तदैव काशीक्षेत्रं वैकुण्ठमिव वैष्णवगुणसंकुलम्.

## ( ४ )

बान्धवाः ? एवंरीत्यांऽशतो निवेदिता द्वितीयपृथ्वीयात्रा श्रीमदाचार्याणाम्. अस्मिन् पृथ्वीपर्यटने श्रीमदाचार्यैः प्राधान्येन स्थाने

स्थाने शिष्यगणा निर्मिताः. परन्तु निसर्गत एव पापमतयः पुरुषाः श्रीमदाचार्याणां प्रतापमसहमाना घूका इव सूर्यं निभृतमद्विषन्. ते चाचार्यचरणानन्यतोगतानवलोक्य तान् सरलमतीन् शिष्यान् कुतर्कैः संदिग्धमतीनकार्षुः. तदेतत्सर्वं मनसिकृत्वा श्रीमदाचार्याः परमवैराग्यसंपन्ना अपि कर्तव्यपालनाय तांस्तान्कण्टकानुद्धर्तुं प्रायतन्त. तदपि वृत्तं संक्षेपेण कथयामि.

यदा प्रथमपृथ्वीयात्रार्थं निर्गताः श्रीमदाचार्या रामेश्वरक्षेत्रमागच्छंस्तदा लक्ष्मणतीर्थे तदीयैः शिष्यैस्तीर्थश्राद्धं प्रारब्धं. तस्मिन् समये केचन वीरशैवसंप्रदायानुयायिनस्तानवैष्णवान् मन्यमाना जहसुः. प्रालपंश्च परस्परं नेमे वैष्णवा न शैवाः. तत्केऽपि पाखण्डिनः स्युरिति. तदिदं तेषां वचनं निशम्य क्रुद्धः शंभुर्यदा विवादमकरोत्तदा ते पराजिता अपि विपरीतमानसा युद्धार्थं सन्नद्धा अभवन्. तत्रापि निराकृताः कांदिशीका अभवन्.

एवमेव श्रीमदाचार्यचरणा यदा रामेश्वरयात्रार्थं निर्गताःसुब्रह्मण्यक्षेत्रमागच्छंस्तदा तत्रत्या ब्राह्मणा विद्यामदोन्मत्तास्तान् वटुवेषधारिणोऽपि भागवतानवेक्ष्य विस्मिताः सोपहासं जगदुः—कथमयमाश्रमविरुद्धो वेषस्तथा भगवदाराधना च क्रियते. यूयं खलु ब्रह्मचर्याश्रमधराः. अस्मिन् हि आश्रमे वेदाध्ययनं गुरुगृहवासस्तथाऽग्निसेवा च शास्त्रेण विहिता. तदननुष्ठीय कथं तीर्थयात्रामिषेण यथेच्छं संचरत ! नायं धर्मः कस्यापि. यदि स्यात्तथापि न ब्रह्मचारिणां. विधिवदासाद्य विद्यां परिणीय च भार्यां कुलमर्यादां स्थापयित्वा ततः परं पारमार्थिकविचारः करणीय इति शास्त्रमर्यादा. तामतिक्रम्य कथं यूयं माननीया भविष्यथेति. इदं च तेषां शास्त्राध्ययनसंपादितज्ञान-

लवोन्मादशालिनां विदुषामपि मूढमतीनां भाषणं समाकर्ण्य श्रीमदाचार्याः स्मेरवदनकमलाः सविनयमवदन्–बुधाः ! सत्यमेव शास्त्रमर्यादा सामान्यजनानां कृते. ये तु अगणितप्राक्तनजन्मलब्धसुकृतसंचया भाग्यशालिनो भगवद्भक्तास्तेषां कृते नेयं. ते तु स्वभावत एव भगवच्चरणारविन्दसक्तमानसा न किमपि कर्तव्यं वाऽकर्तव्यं जानन्ति. तद्वृथाऽग्रहं विहाय स्वजन्मसाफल्यं संपादनीयं. ज्ञानं हि स्वकल्याणायोपयोजनीयं नतु परेषामपमानायेति.

निशम्याचार्यचरणानामिमां वाचं तथा तच्छिष्येभ्यश्च पराजयं प्राप्य गलितज्ञानमदास्ते सर्वेऽपि ब्राह्मणा आचार्यपादकमलयोरपतन. अयाचन्त च क्षमां. उदारहृदया आचार्यचरणा अपि तान् सान्त्वयामासुः.

एवमेव यदा श्रीमदाचार्यचरणाः सिद्धपुरमागत्य ततो वटेश्वरनगरं गच्छन्तः सर्वानपि स्वशिष्यानूचुः–प्रातरर्हत्पत्तनं प्रति गन्तव्यं. तद्भवद्भिः सावधानेन स्थातव्यमिति. सर्वे च शिष्यगणा इमामाचार्यवाचं निशम्य सन्तुष्टा निर्भया अभवन. अथ प्रातरेव वटेश्वरनगरं प्रविशत्सु यथामर्यादं शिष्यगणवेष्टितेषु दिव्यतेजसा पश्यतां मनांसि आकर्षयत्सु आचार्यपादेषु ते जिनमतानुयायिनः सरभसमग्रेभूय तैः समं विवदितुमारभन्त. आचार्या अपि तान् स्वशिष्यैः स्वावासागमनाय बोधयित्वा गृहागतान् तान् सन्मानेनासनदानादिभिरनुजगृहुः.

एवं सत्कृतास्ते जिनपण्डिताः सहसाऽपृच्छन् कोऽयं युष्माकं धर्मः ! भवन्मते दया धर्मो न वा ! भवन्मते प्रमाणं किम् ! तत्र चाधिकारी कः ! इति.

एवंपृष्टा आचार्याः प्रत्युत्तरदानाय स्वशिष्यं समाज्ञापयन्. सोऽपि निर्मलमतिर्गुरुचरणकमले प्रणम्य सावधानेनावदन्. भो जैन-पण्डिताः! शृणुत. अयं हि धर्मः सकलस्य सनातनधर्मस्य सारभूतः पुष्टिमार्गो नाम साक्षाद्भगवदनुग्रहरूपः. यद्यपीह मृत्युलोके सन्ति नानाविधा धर्मास्तथापि अस्य धर्मस्य तुलां न कोऽपि बिभर्ति. अनेकजन्मसुकृतसंचयलब्धभाग्योत्कर्षा एवेमं धर्ममनुसरन्ति. अस्मिन् पुष्टिसंप्रदाये दया प्राधान्येनास्त्येव, परन्तु न युष्माकं धर्मे इव केवलं सा कायिकी किंतु वाचिकी मानसी च. अत्यल्पमिदमुच्यते—वस्तुतस्तु अस्मन्मते सर्वस्याऽपि जगतो भगवदभिन्नत्वात् हिंसायाः कारणीभूता वासनैव नोदेति. ततः कुतो हिंसायाः संभवः. ग्रंथाश्च भागवतादयो भगवत्स्वरूपवर्णनपराः सर्वेऽपि प्रमाणमेव. अधिकारी च यः सर्वं विषयमोहं विहाय केवलं भगवच्चरणकमलासक्तमनाः श्रद्धालुः. नात्र विद्यायास्तादृशी अपेक्षा यादृशी श्रद्धायाः. अत्र च गजेन्द्रादयः प्रमाणं. यस्तु क्षीणकल्मषः स एवेमं संप्रदायं प्रतिपद्यते लभते च कैवल्यमिति

इदं च श्रीमतामाचार्यपादानां शिष्यस्य सकलसंदेहहारकं वचनं निशम्य शान्तहृदयास्ते जिनपण्डिता न किमपि प्रत्यवदन्. केचन संजातोपतापा आचार्यचरणशरणा अभवन्. एवमेव यदा श्रीमदाचार्याः पृथ्वीपर्यटनार्थं निर्गता यवनमहत्पदनामकं स्थानमागच्छंस्तदा तत्रत्या बौद्धा महताऽहंकारेण तैः समं विवदितुं सन्नद्धा अभवन्. तत्रापि जिनपण्डितवदाचार्यशिष्यैरेव पराजितास्ते शिष्यत्वं स्वीचक्रुः.

वाचकाः! केवलं मया स्वरूपदर्शनार्थं कतिपये वादवृत्तान्ताः प्रदर्शिताः. वस्तुतस्तु प्रतिदिनमगणिता विद्यामदोन्मत्ताः पण्डितं-

मन्याः शलभा इव प्रदीपं तानाचार्यचरणान् जेतुमागच्छन परन्तु वीतमनोरथाः शिष्या एव बभूवुः. प्रियपाठकाः ! सर्वेषु मदेषु विद्यामदो हि महान. स च समागतो महता कष्टेन दूरीक्रियते. असेवितभगवच्चरणारविन्दा अलब्धसुकृतसंचयाः क्षुद्रहृदया जनाः स्वल्पां विद्याकणिकामासाद्यात्मानं कृतकृत्यान मन्यमानाः सज्जनानुद्वेजयन्ति. समुद्रकल्पा भगवद्भक्तास्तेषां क्षुद्रैर्वर्तनैरनुद्विग्नास्तान सदुपदेशेनानुगृह्णन्ति. एतदेव नीचोत्तमयोरन्तरं यन्नीचः प्रीत्या सेवितोऽपि अभद्रं करोति. सज्जनश्चापकृतोऽपि कल्याणमेव विधत्ते. अत्र च निदर्शनं कण्टकसहकारवृक्षयोः. अस्तु.





# ८ गृहस्थाश्रमप्रवेशः

१ भगवदादेशः
२ विवाहः
३ तृतीयं पृथ्वीपर्यटनम्.

( १ )

इत्थं समग्रपृथ्वीप्रदक्षिणां द्विर्विधाय सर्वां लोकपरिस्थितिमवलोक्य निश्चितकर्तव्याः श्रीमदाचार्यचरणा यदा कस्मिन्नपि स्थलविशेषे श्रीराधावल्लभस्य मंदिरं विधाय तदनुरोधेन सर्वत्र भारते वर्षे भक्तिमार्गं प्रसारयितुमैच्छंस्तदा श्रीविठ्ठलेशः स्वयं प्रादुर्भूय तानवदत्-वत्स ! श्रीवल्लभ ! त्वं हि मम प्रियतमो भक्तः. साम्प्रतं हीनदीनजने भारतवर्षे मम भक्तिं प्रसारयितुं प्रयतसे. परन्तु यावत्त्वत्सदृशा बहवो नरवरा अस्मिन् कार्ये सक्ता न भवेयुस्तावदस्य त्वदीयस्य मनोरथस्य तादृशी सिद्धिर्न भवेत्. एतत्सर्वं विचार्याहं त्वदीयः पुत्रो नाम भूत्वाऽवतरिष्यामि. तत्त्वं प्रथमतः सर्वाणि कार्याणि विहाय विवाहं कुरु. त्वदर्थं संपादिता कन्याऽस्यां काश्यामेव वर्तते. न चैतद्विषयिजनोचितमिति गर्हणीयं ? यथा हि विषयिणः

संसारे वर्तन्ते तथैव भक्तवरा अपि. परन्तु यथा विषयिणामभिलषितं स्वेन्द्रियसुखं न तथा तेषां. ते हि भगवति समर्पितहृदयकमलाः अपारसुखसागरनिमग्नाः क्षुद्रजनप्रार्थनीयमिदं वैषयिकं सुखं कथं प्रार्थयेरन्. परन्तु ते भगवदभिप्रेतसिध्यर्थं भुवमवतीर्णास्तत्सिद्धये विषयोपभोगे प्रवर्तन्ते. तत्त्वमपि शीघ्रमेव सुलक्षणां कन्यां परिणीय भगवदवतारकार्यार्थं सुपुत्रानुत्पादय. भगवान् स्वयमेवाविर्भूय त्वां स्वप्राकट्यार्थं वदेत् इति.

तमिमं भगवदादेशं समाकर्ण्य प्रियब्रह्मचर्यव्रताः संसारे विरक्ताः श्रीवल्लभाचार्या मनस्यचिन्तयन्-यद्यपि मे मनो निसर्गत एव संसारविषयेभ्यो निवृत्तं न तत्र गन्तुमीहते तथापि भगवदाज्ञापालनमावश्यकमेव. भगवदाज्ञां शिरसा धारयन्नहं खलु मर्त्यलोकमागतः. सोऽहं यदि कुतोऽपि कारणाद्भगवदाज्ञां न पालयिष्यामि तदा भक्तिमार्गस्य प्रसृतिः कथं स्यात्. भक्तिमार्गस्य तु मुख्यमिदं तत्वं यत् भगवदाज्ञा सर्वथा पालनीयेति. तन्मयैव तस्मिंस्तत्वे निराकृते च्छिन्नमूलो वृक्ष इव स कथं समर्थो भूत्वा संसाराग्निसंतप्तानां संतापं हरेत्! तन्मयाऽवश्यमेव भगवदाज्ञापालनीयेति. विचार्य चैवं ते जगन्नाथक्षेत्रं गत्वा पुनर्वाराणसीमाजग्मुः.

( २ )

श्रीविट्ठलेश एवं श्रीमत आचार्यपादानुक्त्वा काशीनिवासिनं विद्वद्वरं देवंभट्टमपि जगाद. सोऽपि विप्रवरः स्वयं भगवतैवमादिष्ट आत्मानं धन्यंमन्यमानः श्रीमतामाचार्यपादानां शुभागमनवेलां प्रतिपालयामास. यदा श्रीमदाचार्यचरणाः काशीनगरीमागतास्तदा तद्दर्शनार्थं धावतां जनानां मुखेभ्यस्तदागमनवार्तां निशम्य सोऽपि

तदावासमागतोऽपारतेजोराशीनिव दिव्यशरीरकांतीन् पुण्डरीकलोचनान् श्रीवल्लभाचार्यचरणानवेक्ष्य मोमुद्यमानस्तादृशदिव्यजामातृचरणरजःस्पर्शेनात्मानमिंद्रादपि श्रेष्ठममन्यत. श्रीमदाचार्या अपि भगवदाज्ञामनुसृत्य समागतं तं देवंभट्टमभिनंद्य मातृपादा एव सर्वं करिष्यन्तीत्यूचुः. अचिरादेव स्वमातृप्रभृतिसंबंधिगणस्यानयनार्थं शिष्यान् प्रैषयन्. आगतेषु च तेषु सर्वेषु यथाविधि शुभे मुहूर्ते समावर्तनं विधाय श्रीमदाचार्या गृहस्थाश्रमं प्राविशन्. वाचकाः ! यद्यपि भगवदाज्ञापराधीनैः श्रीमद्वल्लभाचार्यैर्गृहस्थाश्रमः स्वीकृतस्तथापि तदीयं मनः सर्वदा श्रीगोपालकृष्णचरणकमलासक्तमेवासीत्. तेन यद्यपि सर्वोऽपि वैवाहिकः समारंभो लोकोत्तर एवाभवत्. अगणिता नानादेशेभ्यः समागताः शिष्यसंघा असंख्यान्युपायनानि ददुः, तथापि न तल्लोभः क्षणमपि श्रीमदाचार्याणां चेतसि पदमादधौ. तस्माद्वयमपि तद्विवाहवर्णने उदासीना एव. नहि श्रीमदाचार्यचरणानां विवाहोत्सववर्णनेन कीर्तिस्तोमो वर्धिष्यते ! सन्ति च तेषामद्यापीह भारते वर्षे सनातनधर्मस्य रक्षणार्थं विहितानि पुण्यानि कर्माणि यानि तेषामाचन्द्रार्कं यशःप्रकरं पूरयिष्यन्ति. अस्तु.

एवंरीत्या गृहस्थाश्रमं प्रविश्य श्रीमदाचार्याः किंचित्कालं वाराणस्यां तस्थुः. तत्रापि समागतेभ्यः शिष्येभ्यो भक्तिमार्गमुपादिशन्. माताऽपि श्रीमदाचार्यपादानां तं विवाहोत्सवं तथा स्वपुत्रस्य लोकोत्तरयोग्यतामवलोक्य नितान्तमहृष्यत्.

एवं सकलाश्रमश्रेष्ठं गृहस्थाश्रमं स्वीकृत्य श्रीमदाचार्यचरणाः काश्यां षण्मासपर्यन्तं तस्थुः. तेषु च षट्सु मासेषु श्रीमदाचार्यैः श्रीकृष्ण-

स्योपासना कृता. तथैव भक्तिमार्गप्रसारप्रतिबंधकदूरीकरणार्थं जपाधिकं महत्तपोऽनुष्ठितं. अथ समाप्तेषु षट्सु मासेषु ते पुनरपि पृथ्वीप्रदक्षिणां विधातुमुद्यता अभवन. अस्मिन समये श्रीमदाचार्या मनस्यचिन्तयन्-प्रथमसमये सर्वां लोकस्थितिं निरीक्ष्य द्वितीयप्रदक्षिणासमये स्थाने स्थाने शिष्यसंघाअपि स्थापिताः. अस्मिन समये तेषां भक्तानां मनसि प्रादुर्भूतं भक्त्यंकुरं दृढयितुं स्थानेस्थाने श्रीगोपालनन्दनस्य देवालयाः स्थापनीयाः. यथा च शालाभ्य ऋते वालका भूयोभूयो विद्याग्रहणार्थमुपदिष्टा अपि न विद्याविशारदा भवन्ति तथैव विनापि देवालयैर्भक्ता अपि स्वभक्त्यंकुरान्न स्थिरीकर्तुं प्रभवन्ति इति. विचिन्त्य चैवं शुभसमये काशीतो निर्गताः श्रीमदाचार्यचरणाः प्रथमं वैद्यनाथं तरुखण्डं गताः. तत्र कृप्तनिवासाः किंचित्कालं तस्थुः. तत्रैव निशि भगवान् गोवर्धननाथः स्वयमाविर्भूय जगाद. व्रजे भवद्भिः समागत्य मम सेवाप्रकारः संपादनीय इति. आचार्या अपि तां भगवदाज्ञां शिरसा स्वीकृत्य सर्वैः शिष्यगणैः समं व्रजमागत्य तत्र गोवर्धननाथस्य सेवाविधिं यथाशास्त्रं स्वशिष्याय निवेद्य ततः प्रचलिता मिथिलायोध्यादिमार्गेण गुर्जरदेशमाजग्मुः. तत्र च शिष्यवृन्दानां विश्रम्या स्थानेस्थाने श्रीकृष्णदेवालयान स्थापयित्वा क्रमेण वदरिकाश्रममागच्छन्. अस्मिन् समये सनातनधर्मद्वेषिभिर्यवनैर्या या मूर्तयो देवालयान्नाशयित्वा भूमौ निक्षिप्ता आसन् ताः सर्वा अपि सुप्रतिष्ठा अकुर्वन. तासां मूर्तीनां समुद्धरणेन संजातविश्वासः सनातनधर्मानुयायिजनसमुदायोऽपि नितान्तं मुदितः श्रीमदाचार्यचरणानां शिष्यत्वं जग्राह. प्रतिदिनं परिवर्धमानं श्रीमदाचार्यचरणानां शिष्यसमुदायं वीक्ष्य भीता

द्वेषपरा अपि यवनादयः परकीयधर्मानुयायिनो न किंचिदपि प्रतीकर्तुं शेकुः. केवलमलौकिकेन श्रीमदाचार्यचरणानां तेजसा तथा तदीयेन जनानुरागेण निहतमानसा स्तब्धा अभवन्. प्रतिदिनं प्रौढो रविरिव श्रीमद्वल्लभाचार्याणां प्रतापोऽवर्धत.





# १श्रीनाथप्राकट्यम्

१ पूर्ववृत्तम्.

२ भगवत आचार्यचरणान्प्रति आदेशः.

३ भगवत्साक्षात्कारः.

४ गिरिराजे निवासः.

( १ )

प्रियबान्धवाः! श्रीमदाचार्यचरणा यदर्थमिह जगतीतलेऽवतीर्णा, यदर्थं च तैः पृथ्वीप्रदक्षिणाप्रभृतीनि तपांसि तप्तानि, तस्य मुख्यस्य गोवर्धनधारिणो भगवतः श्रीकृष्णस्य प्राकट्यबोधकमिदं प्रकरणमिति सविस्तरं तन्निरूपयामि.

पुरा खलु दीनपालको भगवान् प्रबलैः कंसादिभिः परिपीडितान् सकलजीवानवलोक्य दयार्द्रस्तेषां शासनार्थं भारतवर्षेऽवततारेति सर्वेषां नः सनातनधर्मानुयायिनां नितरां विदितमेव. स च भगवान् यदाऽवततुर्मियेप तदा देवकीवसुदेवौ कारागारे निवसन्तौ कथंचिदजीवताम्. कंसश्च क्रमेण संजातान् देवकीपुत्रान् घातयामास. तेन दुःखाकुला सा साध्वी देवकी नितरामशोचत्. प्रार्थयामास च भगवन्तं तस्य कंसस्य शासनाय.

अथ शीघ्रमेव भगवती देवकी गर्भवती बभूव. तां च वार्तां निशम्य कंसः परं संतप्तस्तस्मादष्टमात् पुत्रान् स्वस्य नाशमाशंकमानः सावधानतयाऽवर्तत. पूर्णेषु नवसु मासेषु सा भगवन्तं श्रीकृष्णं

सुषुवे. तस्मिन् समये भगवतो दुर्निवार्यया मायया मोहिताः सर्वेऽपि निरीक्षका गाढमस्वपन. न कोऽपि जाग्रदासीत्. सा सती देवकी तं स्वपुत्रमलौकिकतेजस्विनमवलोक्य खिन्ना तं क्रोडेकृत्वा रोदितुमारभत. तस्मिन् समये कृतस्वरूपाविर्भावो भगवान गोपालकृष्णस्तां सान्त्वयितुमुवाच मातः ? अहमस्मि साक्षात् त्रैलोक्यनाथस्तवैव क्लेशान परिहर्तुमिहावतीर्णः. तन्मा रुदिहि. यथैव भवत्या मम निरतिशयमाराधना कृता तथैव यशोदयाऽपि. तन्मां गोकुलं नीत्वा यशोदाधीनं कुरु. तत्र च निवसंस्तव दुःखानि परिहर्तुं प्रयतिष्य इति. उक्त्वा चेत्थं धृतवालरूपो भगवान् अतिमृदुलेन करपल्लवेन वसुदेवस्य पादस्था महतीः शृंखलाः पस्पर्श. तस्मिन्नेव क्षणे ताः शृंखला नामशेषा अभवन. तेन संजातविश्वासो वसुदेवस्तदुक्तिं स्वीकृत्य कथमपि देवकीहस्तात्तं वालरूपिणं मुकुन्दं गृहीत्वा गोकुलं गन्तुं तस्मात्कारागाराच्चचाल. भगवान्देवकीनन्दनः पिहितानि महान्ति कपाटयुगलानि पादकमलेन यदायदा पस्पर्श तदातदा तानि स्वयमेवोद्घाटितानि. ततो निर्विघ्नं निर्गतः स महात्मा वसुदेवो यदा यमुनातीरमाजगाम तदोभयतीरवाहिनीं वर्षाजलातिरेकागाधां यमुनां वीक्ष्य खिन्नोऽपि दृढश्रद्धः सहसा तां प्रविवेश. क्रमेण गच्छतस्तस्योरोमात्रं यदा यमुनायाः सलिलमभवत्तदा भगवान् स्वयमेव स्वपादकमलं वहिर्निष्कासयित्वा तत् पस्पर्श. स्पृष्टमात्रमेव सलिलं द्विधाऽभवत्. मार्गोऽपि निष्कर्दमः. स च वसुदेवस्तद्वीक्ष्य स्वक्लेशनाशे विचिन्तः क्रमेण यशोदालयं प्रविश्य तदन्तिके तं स्थापयित्वा तदीयां कन्यां प्रत्याजहार.

तत्र च क्रमेण वर्धमानः स त्रैलोक्यनाथः श्रीकृष्णः प्रतिदिन-

मलौकिकीभिः स्वलीलाभिः स्वभक्तानां मनांसि रंजयन् यशोदानन्द-योरानन्दमनल्पं व्यतानीत्. प्रतिदिनं तेन दुष्टेन कंसेन प्रेरितान दुष्टान जनान् हत्वा सकलं गोकुलं ररक्ष.

एकदा भगवान् यशोदानन्दनः स्वसहचरैः समं गाश्चारयितुं समीपवर्ति वनं जगाम. मुक्त्वा च तत्र सकलं धैनुकं अतिसुन्दरस्य श्रीगोवर्धनगिरेरुपत्यकायां नानाविधाभिः क्रीडाभिः क्रीडितुमारभत. अचिरादेव भगवान् पाकशासनः प्रबलाभिरचिरद्युतिविलसिताभिर्घ-नावलीभिर्वर्षितुमारभत. ते च भगवद्भक्ता गोपालास्तथा कृत्स्नं धैनुकं तेन वृष्ट्यतिरेकेण तथोद्विग्नं भीतिविह्वलं सत्वरं श्रीकृष्णस्य समीपमाश्रयार्थमागच्छन्. भगवान् पाकशासनस्य गर्वमपहर्तुमिच्छुः स्वयं गोवर्धनधारिणः श्रीनाथस्य स्वरूपं धृत्वा तं गोवर्धनमेवोद्धृत्य सर्वान् ररक्ष. तदिदं श्रीगोवर्धनोद्धारकालिकं स्वरूपमद्यापि श्रीनाथ-द्वारे वर्तते. श्रीमदाचार्यैर्यत्खलु प्रतिष्ठापितं व्रजे तदिदमेव रूपं. यद्यपि भगवान् सर्वत्र चतुर्भुजस्तथापि अस्मिन स्वरूपे स द्विभुज एव लक्ष्यते. कारणं चात्र भागवत एव निरूपितमिति तत एवावग-न्तव्यं. विस्तरभयादत्र न लिख्यते. अस्तु. एवं स्वक्रीडाभिर्गोकुल-वासिनो भक्तगणान् सुखयित्वोचिते समये स्वावतारकृत्यं कंसवधा-दिकं विधाय स्वावतारं समापयामास. समापयित्वा वैकुण्ठंगतोऽपि भगवानतिरमणीयतया व्रजभूमीनां परमभागवततया व्रजवासिनां गोवर्धनोद्धारकालिकरूपेण तत्रैव गोवर्धनगिरौ प्रतिवसति स्म. समये समये च स्वभक्तान् स्वरूपं दर्शयामास च. यदा च यवनसंबन्धा-त्क्रमेण भगवद्भक्ता दुर्लभा अभवन् विद्यमानानामपि भक्तानामन्तः-करणानि पापाक्रान्ततया भक्तिविमुखान्यजायन्त तदा स भगवांस्तत्रैव निवसन्नपि न कदापि गोचरोऽभूत्.

एवं व्यतीतेषु कतिपयवर्षेषु सकलजगन्नाथः परमात्मा नारायणः सनातनधर्मस्य तथा तदनुयायिनां च दुर्दशामवलोक्य खिन्नोऽनुकम्पया तदुद्धारार्थं कांश्चित्स्वभक्तान् भूतले प्रेषयामास. तेषु सर्वेष्वपि श्रीमद्वल्लभाचार्या एव मुख्या आसन्. श्रीमदाचार्याश्च समग्रां पृथ्वीं पर्यटन्तः स्थानेस्थाने शिष्यसंघान् यदा स्थापयामासुस्तदा भगवान् स्वयं पुनरपि गिरिराजे भक्तगणस्य कल्याणार्थमाविर्भवितुमियेष. यदा च श्रीमद्वल्लभाचार्याणां मनसि प्रकटीभूय स्वप्राकट्योत्सवविधानार्थं भगवानादिदेश, ततः पूर्वमेव स स्वयमेव स्वीयामेकां भुजलतां बहिर्निष्कास्य स्वागमनं विख्यापयामास. तद्वृत्तमित्थम्.

एकदा कस्यापि महाभागस्य व्रजवासिनो गोपालस्य गौः क्रमेण गोवर्धनपर्वतं गत्वा तत्रासायं चरन्ती सायं स्वभवनमागच्छत्. एष च तस्या नियतः क्रम आसीत्. सा च धेनुः सकृत्प्रसूता प्रभूतं दुग्धं ददौ. एवंवृत्ते एकदाऽकस्मात् सा धेनुर्नीरोगाऽपि बिन्दुमात्रं दुग्धं नादात्. तद्वीक्ष्य चिन्ताकुलः स गोपालो बहूनुपायांश्चक्रे परन्तु न यशस्वी बभूव. अथ स गोपालः स्वधेनोः सुस्वभावतां मनसि कृत्वाऽचिन्तयत् कोऽपि चौरः प्रतिदिनमस्या दुग्धमपहरति नूनं, तन्निभृतं गत्वा स द्रष्टव्य इति. विचार्य चैवं द्वितीयदिने तां गामनुजगाम. सा गौर्यथाक्रमं गोवर्धनपर्वतं गत्वा तत्रासायं चरन्ती गृहगमनवेलां समुपस्थितामवलोक्यैकस्मिन् स्थले स्थिताऽमृतधाराभिरिव स्तननिर्गताभिर्दुग्धधाराभिरधस्तनं कमपि अभिषिषेच. स च गोपालो वृक्षमध्यलीनस्तद्वृत्तं साक्षात्कृत्य संजातविस्मयो गृहगमनमार्गेण गतायां गवि ततो निर्गत्य तत्स्थलमागतः सर्वशंखचक्रादिचिह्नजातलांच्छितां भगवतो दिव्यां भुजलतां वीक्ष्य नमस्कृत्य च गृहमाययौ.

तां चेमां वार्तां स स्वमित्रेभ्यो न्यवेदयत्. तेऽपि सर्वे परं विस्मिता मिलित्वा गोवर्धनगिरिमागतास्तां भुजलतां वीक्ष्य परं विस्मितास्तं देवं प्रकटीकर्तुमैच्छन्.

अत्रान्तरे तत्र कश्चन वृद्धतापसस्तीव्रं तपश्चरन् स्थितस्तदुद्घाटनतत्परांस्तान् गोपालानवोचत्. महाभागाः ? अस्मिन् जगतीतले यत्किंचिज्जायते तत्सर्वमीश्वरेच्छयैव. न मानवस्य वांच्छया किमपि भवति. यदि नैवं तदा कथमयमेव भगवान् स्वभुजलतामुन्नमय्य स्वास्तित्वं युष्मभ्यं निवेदयामास. तस्मादस्य भगवतः प्रकटीकरणव्यापाराद्विरमतम्. यथा हि युष्माकं संचितसुकृतवशो भगवान् स्वभुजलतां स्वयमेवोदनमयत्तथैव स्वमुखारविन्दमपि प्रकटीकरिष्यतीति. तस्य दिव्यतेजसस्तापसस्येदं वचनं सत्यं मन्वानास्ते सर्वेऽपि गोपालास्तदुद्धरणव्यापारान्निवृत्तास्तां भुजलतामेव पूजयामासुः. ततश्च क्रमेण तां वार्तां निशम्य समागच्छन्तो व्रजवासिनो भगवदादरपरा महोत्सवं चक्रुः.

अथ यदा चंपारण्ये श्रीमदाचार्याः प्रादुरभवंस्तस्मिन्नेव दिने भगवता गोवर्धनधारिणा श्रीकृष्णेनापि स्वमुखं प्रकटीकृतं. तदेतदाश्चर्यं विलोक्य सर्वेऽपि व्रजवासिनः शुभकालं समागतमवलोक्य सन्तुष्टा भगवदाराधनामारभन्त.

यदा श्रीमदाचार्यचरणास्तृतीयपृथ्वीप्रदक्षणार्थं निर्गतास्तदा भगवान् देवकीनन्दनः स्वयमाविर्भूय जगाद–'मां प्रकटयित्वा मम सेवाविधिं संपादय. तत एव सर्वत्र भक्तिमार्गः प्रसरेदिति'इति मया पूर्वमेव निवेदितं. श्रीमदाचार्याश्चेमां भगवदाज्ञां शिरसा स्वीकृत्य तत एव निवृत्ता मथुरानगरीं समागत्य शिष्यैः सममतिष्ठन्.

तस्मिन् समये मथुराक्षेत्रे नागरिका जना अतिव्याकुला आसन्. तस्य व्याकुलीभावस्य कारणमिदमासीन्- तस्मिन् समये समग्रभारतस्य स्वामी यवन एव. स हि प्रकृत्या सनातनधर्मानुयायिनोऽद्वेट्. मथुराक्षेत्रे श्रीभगवतःप्रादुर्भावनिमित्तं तत्रस्थैर्गोपालैः समारब्धमुत्सवमवलोक्य नितान्तं क्रुद्धः स हि कंचन प्रबलमैंद्रजालिकं संप्रेष्य समातनधर्मानुयायिनां विडम्बनां समारभत. स चैन्द्रजालिकः स्वमायया यमुनातीरं गतानां सनातनधर्मानुयायिनां शिखामाच्छिद्य तन्मुखानि श्मश्रुलान्यकरोत्. तेन भीताः सर्वे व्रजवासिनः सुतरां शोकाकुलाः स्वधर्मरक्षार्थं परमात्मानं प्रार्थयन्त. एवं व्यग्रेषु सर्वेषु मथुरानगरवासिषु श्रीमदाचार्याः स्वशिष्यगणैः समं स्नातुं यमुनातीरं गन्तुमारभन्त. तस्मिन् समये परमव्याकुलास्ते नागरिका आचार्यचरणांस्तत्र गन्तुं प्रतिषेधन्तः सर्वं वृत्तं तेभ्यो न्यवेदयन्.

परमात्मकृपाशालिनस्ते परमभागवताः श्रीमदाचार्यचरणास्तत्सर्वमाकर्ण्य स्मेरवदनकमला गंभीरया वाण्या प्रत्यूचुः 'न भेतव्यं ? सर्वपालकः परमात्मा कदाऽपि स्वधर्महानिं न सहिष्यत इति. उक्त्वा चेत्थं सहसा यमुनातीरमागत्य परमपवित्रे तत्सलिले श्रीकृष्णगात्रसौन्दर्यप्रवाह इव सस्नुः. अन्येऽपि संजातविश्वासास्तैः समं समागता जना अपि तथा शिष्यगणा अपि सुखेन स्नानं चक्रुः. तान् सशिखं प्रत्यागतानवलोक्य संजातविस्मयास्ते सर्वेऽपि मथुरानगरवासिनः श्रीमदाचार्यचरणानलौकिकान् मन्यमानाः सहसा तस्य यवनैन्द्रजालिकस्य गर्वमपहर्तुं विज्ञापयासासुः. आचार्यचरणा अपि वृथा त्रासदायिनस्तस्य यवनस्य शासनविधानायोत्सुकाः स्वयमपि एकं तथाविधं यंत्रं दिल्लीनगरे शिष्यहस्तेन प्रेषयामासुः. तेनोद्विग्नः

स दिल्लीश्वरस्तत्कारणं ज्ञात्वाऽपहृतगर्वस्तं यवनं प्रत्यागन्तुमादिदेश. तस्मिन् यवने मथुराक्षेत्रान्निर्गत्य स्वनिवासं गते सति सर्वे गोपालाः परममुत्सवं चक्रुः. श्रीमदाचार्यचरणान् शरणमागत्य तदाज्ञया वर्तितुमंगीचक्रुः.

अथ शुभमुहूर्ते सर्वैरपि सानन्दैर्व्रजवासिभिः समं श्रीमदाचार्यचरणा आनन्दातिरेकसमुल्लसन्मानसाः प्रबुद्धैस्तत्प्रतिबिंबैरिव तेजस्विभिः शिष्यगणैः समेता गोवर्धनपर्वतं प्रति श्रीगोवर्धनधारिणः श्रीकृष्णस्य दर्शनार्थं प्रातिष्ठन्त. तस्मिन् समये सर्वमपि गोकुलस्थं गोकुलं प्रस्रवद्दुग्धधारापूतराजमार्गे तान् सानन्दमनुजगाम. व्रजांगना अपि भक्त्यतिरेकसमुल्लसद्धृदयकमला मञ्जुलैर्नूपुरध्वनिभिः सर्वं वाचालयन्त्यो मधुरैः कण्ठस्वरैर्भगवतो लीलाजातं गायन्त्यः श्रीमतां श्रीवल्लभाचार्याणामनु प्रतस्थिरे. श्रीमदाचार्यचरणा अपि तादृशं भक्तगणानामुत्साहं तथा भगवद्भक्तिं च विलोक्य तथैव व्रजे स्थानेस्थाने कृष्णावतारे श्रीदेवकीनन्दनेन कृतं लीलासहस्रं स्मरन्तः प्रेमातिशयेनातिविस्तीर्णाभ्यां नयनकमलाभ्यां प्रमोदाश्रूणि विसृजन्तः स्खलत्पादविन्यासाः शनैः शनैर्ययुः. अथ दूरादेव तं बालपल्लवमण्डितकदम्बवृक्षसनाथं, अतिमधुरगुंजारवभ्रमरावलिविचुम्बितकुसुमामोदसुन्दरवनलतासहस्रं, तत्र निवसतो भगवतः श्रीकृष्णस्य सेवार्थं स्वर्गादवतीर्णाभिः कामधेनुभिरिव दर्शनीयाभिरसंख्याभिर्धेनुभिः समलंकृतं, मन्दमन्दवाहिनिर्मलसलिलनिर्झरव्याप्तं, श्रीमतां श्रीवल्लभाचार्याणां सत्काराय पट्टवस्त्रेणेव शाद्वलेन समावृतकायं, निर्भयं संचरन्तीभिर्गोपांगनाभिरिवातिदीर्घनयनाभिर्हरिणांगनाभिर्मण्डितं श्रीगोवर्धनपर्वतं साक्षात्कृत्य भक्तिविवशाः श्रीमदाचार्यचरणास्तं प्र-

णेमुः आरभन्त च भगवत्स्तोत्रं. येन च प्रथमं निर्गताया भगवतो भुजलताया दर्शनं कृतं स 'सदुपांडे' नामा गोपालो मार्गदर्शको नाम भूत्वाऽग्रतः प्रचचाल. पश्चाच्च श्रीमदाचार्यचरणास्तथा तदीयाः शिष्यसंघाः. सर्वेऽपि व्रजवासिनः सात्विकभावोत्पत्त्या विदेहा अभवन्. तमिमं व्रजवासिनां भाग्योदयं तथा श्रीमतामाचार्यचरणानां च द्रष्टुं देवाः सर्वे स्वस्वविमानस्था वियति एकत्र तस्थुः. दिव्या अप्सरसश्च महता प्रमोदेन भगवद्गुणानुवादान् जगुः. कतिपये दिव्या भक्तगणाः स्वर्गं विहाय तमेव गोवर्धनगिरिं स्वर्गाधिकं मन्यमानास्तत्रैवागच्छन्. तदानीं श्रीगोवर्धनधारी भगवानपि परमभागवतानां श्रीमदाचार्याणां स्वदर्शनार्थं तथा स्वप्राकट्यविधानार्थमागमनं निशम्य सानन्दः महता प्रेम्णा तस्मात्स्थानान्निर्गत्याग्रे समाययौ. श्रीगोवर्धनोद्धारकं श्रीमतां श्रीवल्लभाचार्याणां सत्कारार्थमग्रे समागतमवलोक्य सर्वेऽपि व्रजवासिनस्तथा नानादेशेभ्यः समागताः शिष्यगणाः परं विस्मिता अभवन्. अघोपयंश्चोच्चैर्भगवतः श्रीयशोदानन्दनस्य नाम. ततस्त्वरितं समागच्छन् श्रीगोवर्धनधारी विनयातिशयेन वा प्रीत्यतिरेकेण वा तच्चरणकमलयोर्निपततः श्रीमदाचार्यचरणान् परमविशालेन भुजयुगलेन मध्ये एव समवलंब्य क्रोडेकृत्वा परमाश्लिषत्. तदीयाश्लेषसुखेन श्रीमदाचार्यपादा दिव्यं सुखमनुभवन्तः किंचित्कालं स्वपरभेदं व्यस्मरन्. अथ कथंचित्तदीयमाश्लेषसुखं विहाय श्रीमदाचार्या आनन्दाश्रुधौतं परमभाग्यराशिलभ्यं भगवतश्चरणारविन्दं नमस्कृत्य तदीयपादपंकजरजोभिः स्वललाटपटलमलंचक्रुः. भगवान् वासुदेवः स्वयमवोचत्—वत्स ? श्रीवल्लभ ? त्वं हि मदीयां भक्तिं जगति प्रसारयितुमवतीर्णोऽसि. अद्यपर्यन्तं

त्वया खलु सकलं भारतवर्षे विरटित्वा सर्वा लोकस्थितिरवलोकितैव. अस्मिन् पुष्टिमार्गे साक्षाद्भगवतः सेवैव विहिता. सेवां विना नास्मिन् मार्गे भगवतः कृपा लभ्यते. तत्त्वं मां मंदिरेऽभिषिच्येत एव सर्वत्र पुष्टिमार्गसम्प्रदायं प्रवर्तय. अचिरादेवाहं स्वयमेव सर्वेषु प्राणिगणेषु तथा प्रेरणां करिष्यामि यथाऽयं सम्प्रदायः सार्वत्रिको भवेदिति.

यद्यपि अस्मिन् समये श्रीमदाचार्याणां समीपे धनं तादृशं नासीद्येन ते शीघ्रमेव महामन्दिरं विधाय तत्र श्रीनाथं स्थापयितुं शक्नुयुः, परन्तु परमभागवतास्ते यत्किंचिदपि न विचार्य तां भगवदाज्ञां शिरसा स्वीकृत्य तत्रैव तेषां सर्वेषां व्रजवासिनां साहाय्येन समीचीनमेकं मन्दिरं विधाय तत्र श्रीनाथं स्थापयामासुः. तत्सेवाप्रकारं च सर्वं स्वशिष्येभ्यो निवेद्य स्वयं श्रीनाथस्याज्ञां गृहीत्वा पृथ्वीपर्यटनार्थं ययुः. मार्गे च सर्वत्र प्रकटीभूताः श्रीकृष्णनाथस्य मूर्तीरुद्धृत्य सुन्दरेषु मन्दिरेषु अस्थापयन्.

यदा च श्रीमदाचार्यपादास्त्रैलोक्यनाथं श्रीवसुदेवनन्दनं श्रीगोवर्धनगिरौ स्वल्पे मन्दिरे स्थापयामासुस्तदानीं तेषां मनसि महान् खेदो बभूव. यो हि साक्षाज्जगदीश्वरः स मया निर्धनेन साधारणे देवालये स्थापित इति. तं च मनसि कृत्वा दीनदयालुः श्रीनाथः स्वभक्तस्य अंबालाग्रामवासिनः पूर्णमल्लस्य मनसि मन्दिरनिर्माणार्थं धनदानाय प्रेरणां चक्रे. स तु पूर्णमल्लः साधारणस्तादृशमंदिरस्य निर्माणे द्रव्यव्ययं बहु गणयंस्तावतो द्रव्यस्य संपादनार्थं सोत्साहं प्रावर्तत. यदाप्रभृति स भक्तवरः पूर्णमल्लः श्रीनाथस्य मंदिरं विरचयितुं कृतसंकल्पः स्वव्यवसायमारभत, तदारभ्यैव तदीयं धनं परं

ववृधे. अचिरादेवापारं धनं लब्ध्वा सन्तुष्टः श्रीमतां श्रीवल्लभाचार्याणां पृथ्वीपर्यटनात्प्रत्यागमनवेलां प्रतीक्षमाणस्तस्थौ.

श्रीमदाचार्याश्च यदा क्रमेण तीर्थानि पर्यटन्तस्तदीयं निवासग्राममागच्छंस्तदा स श्रुतकीर्तिः सत्वरं गत्वा प्रणम्य श्रीकृष्णस्याज्ञां श्रावयामास. श्रीमदाचार्यचरणा अपि तत्सर्वं जानन्तः शीघ्रमेव तथा विधातुमादिदिशुः. अत्रान्तरे स भगवान् श्रीनाथः स्वयं श्रीमदाचार्यानवदत्. यद्यपि त्वया स्वशिष्येभ्यः कथितं भगवत्सेवेत्थं विधेयेति तथापि तद्विहिता मे न रोचते तत्त्वमेव सत्वरमागत्य मदीयसेवाव्यवस्थां संपाद्य पुनरपि तीर्थान्यटितुं व्रजेति. तामाज्ञां शिरसा धृत्वा श्रीमदाचार्यास्तत एव निवृत्ता गिरिराजमागत्य श्रीगोवर्धनधारिणः सेवां व्यधुः. तत्र च निवसत्सु श्रीमदाचार्यचरणेषु स परमभाविकः पूरणमल्लो लक्षमुद्रासहितस्तत्र समागत्य मन्दिरं विरचयितुमाज्ञामयाचत. श्रीमदाचार्याश्च तादृशस्य महतो मन्दिरस्य निर्माणात्पूर्वं तदीयं छायाचित्रं निर्मातुमादिशन्. यथानियोगं तन्निर्माय तेन समानीते तस्मिन् पुनरपि द्वितीयं तथा तृतीयं तन्निर्मातुमगदन्. गुर्वाज्ञापालनतत्परः स पूर्णमल्लः पुनरपि तस्य च्छायाचित्राणि विरचय्य प्रादर्शयत्. समागतेषु तेषु त्रिष्वपि भविष्यद्भगवन्मन्दिरच्छायाचित्रेषु स्वशिष्यानाहूयावदन्—शिष्याः ? इदं हि भगवतो गोवर्धनधारिणः प्रथममन्दिरस्यादिमं शिखरं. इदं चात्रैव भविष्यतो मन्दिरस्य. एतच्च यदा यवनत्रासाद्भगवान् वासुदेवः स्वयमेवाऽन्यत्र गन्तुमिच्छेत्तदानीं तत्र भविष्यतो मन्दिरस्य. अस्तु. सम्प्रति पूर्णमल्लोऽत्रैव भगवन्मन्दिरं विधातुमारभतामिति. तामाज्ञां स्वीकृत्य महता प्रमोदेन स पूर्णमल्लो मन्दिरं समारभत परन्तु

शीघ्रमेव सर्वमपि धनं क्षीणं. तेन स पुनरपि प्रभूतं धनं संपादयितुं दक्षिणां दिशं ययौ.

श्रीमदाचार्यचरणाश्च तत्रैव निवसन्तः सर्वं भगवन्मनोरथानुरूपं व्यवस्थापयामासुः. एकदा भगवान् श्रीनाथ एकां गावमानेतुं श्रीमदाचार्यचरणानवदत्. तेऽपि भगवन्मनोगतं जानन्तः शीघ्रमेव सदुपांडेनामकं परमभागवतं गोपालं समाहूय तस्मै सुवर्णवीटिकां प्रदाय गामानेतुमगदन्. स तु क्रयणेन धेनोरानयने कारणान्तरमपश्यन् विनयेन जगाद. आचार्यचरणाः? अहमस्मि गोपालः मदीये गृहेऽसंख्या धेनवः सन्ति तासु या भगवते रोचते सा ग्राह्येति. तस्येदं वचनमभिनंद्याऽपि यदा श्रीमदाचार्याः सुस्वरूपां गावं क्रीत्वाऽनेतुमवदंस्तदा स गुरुनियोगानुपालनतत्परः शीघ्रमेवापणं गत्वा सर्वशुभलक्षणान्वितां गामानिनाय. श्रीमदाचार्या अपि तां गावं वीक्ष्य सन्तुष्टा यथाविधि पूजयित्वा श्रीनाथस्य पुरतस्तामस्थापयम्. श्रीनाथश्च तां वीक्ष्य परं मुदितस्तस्या एव दुग्धं प्रतिदिनं पपौ. अथ क्रमेण सर्वे एव श्रीमदाचार्याणां शिष्याः सुलक्षणा गावः प्रतिदिनं समानीय श्रीनाथाय ददुः. तेन शीघ्रमेव तत्रासंख्या गावः संमीलिताः. ताः सर्वा एव समादाय भगवान् गोपालैः समं तत्र क्रीडन् श्रीमदाचार्याणां तथा शिष्याणां च परमां मुदं व्यतानीत्.

एवं प्रतिदिनं महता प्रयत्नेन श्रीगोवर्धनधारिणः श्रीवासुदेवस्य मनोरथानुरूपां सेवां विधाय तं सन्तोषयन्तस्तत्रैव परमरमणीयेऽतिविमलविकचकमलभासुरसरोवरसुन्दरे विजितवैकुण्ठसौन्दर्ये गिरिराजे निवसन्तः परं सन्तोषमलभन्त. अगणिताः शिष्यगणा अपि.

---



## १० पुत्रलाभः

१ भगवदर्चायाः सातत्यचिन्ता.
२ पुत्रप्राप्तिः.
३ व्रजयात्रा.
४ श्रीनाथस्य नूतनालये प्रतिष्ठापनम्.

( १ )

एवं बहुकालं श्रीगोवर्धनधारिणं भगवन्तं श्रीनाथं सम्यक् सेवया सन्तोषयित्वा तदाज्ञयाऽचार्यचरणा वाराणसीं प्रत्याजग्मुः. तत्र गृहस्थाश्रमानुरूपं सर्वाणि कर्माणि कुर्वाणाः किंचित्कालमतिष्ठन्. तत्र च ब्राह्मणभोजनादिकं सर्वं समनुष्ठितं. तथैव काशिकैः पण्डितैः समं विवादं विधाय तेषां गर्वोऽपि निरस्तः. एवं प्रयाते काले श्रीमदाचार्यचरणा मनसि विचिन्तयामासुः—मया खलु भगवदाज्ञात एव परिणीतं. नासीन्मे मनसि प्रथमं विवाहः करणीय इति. परन्तु भगवत्सेवायाः सातत्यार्थं तथा श्रीभगवतो विठ्ठलेशस्य नियोगपालनार्थं च विवाहः कृतस्तथापि न किंचिदपि आशाचिह्नं पश्यामि. तत्कथमयं मम भगवतश्च मनोरथः सफलो भवेदिति.

एवं विचिन्त्यैकस्मिन्दिने निद्रितेषु श्रीमत्सु आचार्यचरणेषु भग-

वान् श्रीनाथः स्वयमाविर्भूय जगाद—वत्स? सर्वस्याऽपि अस्य भक्तिमार्गस्य चिन्ता मे. यदि भक्तिमार्गो न प्रसरेत् तदा कथं मे 'न मे भक्तः प्रणश्यति' वाक्यं सार्थं भवेत्? त्वया चिन्ता न करणीया. अचिरादेव मदीयांशभूतः प्रथमः पुत्रस्ते भवेत्. द्वितीयश्च श्रीविट्ठलेशः स्वयमेव. त्वं च शीघ्रमेव तयोः प्रत्यक्षं करिष्यसि इति. निगद्य चैवं तिरोहिते भगवति श्रीमदाचार्याः परं सन्तुष्टाः सम्प्रदायरक्षणे तथा श्रीभगवतो गोवर्धनधारिणश्च सेवासातत्ये विचिन्ता अनन्यभावेन भगवतः सेवायां तथा शिष्याणामुपदेशे स्वकालमयापयन्. यद्यपि श्रीमदाचार्याणां मुख्यः संप्रदायः पुष्टिमार्ग एवासीत्तत्र तु नास्ति तादृशस्य तपसस्तादृशस्य ज्ञानस्य वाऽपेक्षा यावती श्रद्धायाः, परन्तु श्रीमदाचार्या वेदपठनं तथा शास्त्राभ्यासं चारक्षन्. समये समये च यज्ञान् विधाय सर्वान् विप्रगणानतोषयन्.

## ( २ )

अथाचिरादेव सकलस्य भक्तिसम्प्रदायशिष्यसंघस्य कल्याणाय तथा भाविनां सनातनधर्मानुयायिनामुद्धाराय च श्रीभगवतो महाशक्तिरिव श्रीमदाचार्यचरणानां पत्नी महालक्ष्मीः गर्भमधत्त. यस्मिन्दिने सा गर्भवती बभूव तस्मिन्दिनेऽतिकल्याणकारीणि शुभसूचकानि चिह्नानि सर्वत्राभवन्. ततः क्रमेण प्रवर्धमाने तस्मिन् गर्भे सर्वे श्रीमदाचार्याणां शिष्यगणाः परममोदन्त. दोहदादिपूरणे चात्यन्तमुदासीनान् श्रीमदाचार्यचरणानवलोक्य ते शिष्यसंघाः श्रीमदाचार्यचरणानां मातृपादांस्तत्पूरणायावदन्. तेऽपि सानन्दाः स्वस्नुषाया दौहृदानापृच्छ्य तान्विज्ञाय परं मुदिता अजायन्त. श्रीम-

दाचार्यचरणा अपि स्वकान्ताया भक्तिमार्गप्रसारैकध्येयान् दोहदान-वगम्य निश्चिन्ता अभवन्.

अथ क्रमेण वर्धमानः स गर्भोऽद्वितीयां दिव्यां लावण्यकान्तिं बभार. सर्वेऽपि शिष्यास्तन्निरीक्ष्य विस्मिता हृष्टाश्च बभूवुः. ततः क्रमेण नवसु मासेषु परिपूर्णेषु सा माताऽदिशक्तिरिव महालक्ष्मीः प्रथमं सर्वशुभलक्षणान्वितं पुत्रं प्रासूत. यस्मिन् दिने स प्रथमः पुत्रः श्रीमदाचार्याणामिमां भूतलविख्यातां भारतभुवमलंचक्रे तस्मिन्दिने सर्वत्र नाना शुभचिह्नानि अजायन्त. विशेषतश्च व्रजे सर्वा अपि गावो दुग्धदुग्धा अपि पुनरपि स्तनेभ्यः प्रभूतं पयः समुदसृजन्. सर्वे गोपालाः समं गोपांगनाभिः स्थानेस्थाने कृतमण्डला मधुरवेणुरवेण सर्वान् मोहयन्तोऽनृत्यन्. अगायंश्च भगवतो लीलास्तोत्राणि. स्वयं भगवान् श्रीगोवर्धनधारी स्वभक्तगणैः समं रासक्रीडां चक्रे. तत एवं समुत्पन्नानन्दे जगति प्रमुदितास्ते श्रीमदाचार्यचरणा महोत्सवेन तस्य पुत्रस्य जातकर्मादि विधाय एकादशेऽहनि तदीयं नाम श्रीगोपीनाथ इति चक्रुः. सर्वेऽपि जना भगवता कृतामाज्ञां स्मरन्तः परं सन्तुष्टा अभवन्. सोऽपि बालकः क्रमेण शुक्लपक्षेन्दुरिव वर्धमानः सर्वथा स्वपितृचरणानामनुगुण एव बभूव.

अथ व्यतीते वर्षद्वये भगवान् विठ्ठलेशः स्वयमेवास्य पुष्टिमार्गस्य रक्षणार्थमवतर्तुं कृतसंकल्पस्तस्य महालक्ष्म्याः परमपवित्रे कुक्षौ न्यवसत्. तदेतत् सर्वं वृत्तं जानन्तः श्रीमदाचार्यचरणाः परमतुष्यन्. स्ववंशस्य तथा भगवत्सेवायाश्चाविच्छेदेन प्रचालनार्थं साक्षाद्भगवन्तमेवावतरन्तमवेक्ष्य कस्य न मोदो भवेत्? वाचकाः?

यथा हि सांसारिका जनाः पुत्रानिच्छन्ति तत्प्राप्त्या च मोदन्ते तथैव भगवद्भक्ता अपि. तथापि तत्र महद्वैलक्षण्यमस्ति. प्रथमास्तु केवलं स्त्रीपुत्रादिभ्यः स्वस्य सुखं वांच्छन्त एव तानिच्छन्ति. चरमास्तु केवलं परोपकारतत्पराः सदा भगवदाराधनपरास्तदर्थमेव. नहि भगवत्सेवां विनाऽन्यत्किमपि निरतिशयप्रेमास्पदं भगवद्भक्तानाम्.

स हि गर्भो यथायथाऽवर्धत तथातथा मातुर्महालक्ष्म्या मुखकान्तिः परं विलक्षणा बभूव. सा च सती पूर्ववृत्तं किमपि न जानन्ती यदा सदैव हसन्तं पुरतस्तिष्ठन्तं विठ्ठलेशमपश्यत्तदा शंकाकुला तद्वृत्तमाचार्यपादेभ्यो रहसि जगाद. ते तु तदाकर्ण्य सन्तुष्टाः सर्वं वृत्तं कथयित्वा तां प्रत्यवदन्, संकल्पितो मनोरथोऽचिरादेव सफलो भविष्यति इति.

अथ शुभमुहूर्ते परिपूर्णेषु नवमासेषु सकलस्य भारतस्योद्धारार्थं साक्षाद्विठ्ठलेश एव बालरूपेणावततार. अवतीर्णे च तस्मिन् सर्वत्र महाप्रमोदो बभूव. न केवलं पुष्टिमार्गानुयायिन एव सन्तोषसागरमग्ना अभवन् किंतु सर्वे सनातनधर्मानुयायिनः. विधर्माणश्च परं भीतिविह्वलाः. श्रीमदाचार्याश्च श्रीविठ्ठलेशस्य प्रादुर्भावेनात्यन्तं सन्तुष्टा महतोत्सवेन तदीयं जातकर्मादिकं चक्रुः. एकादशेऽह्नि प्राचीनं वृत्तं सर्वं वृत्तं जानन्तः सत्यमेव तदीयं श्रीविठ्ठलेश" इति नाम चक्रुः. सोऽपि बालोऽतितेजस्वी प्रतिदिनं तथाऽवर्धत यथा पश्यतां तेषां सर्वेषामपि महान्विस्मयो बभूव.

श्रीमदाचार्यपादाश्च तत्पुत्रद्वयं निरतिशययोग्यताशालि पुष्टिमार्गस्य प्रसारार्थमत्युपयोगि निरीक्ष्य सन्तुष्टाः सर्वं तदीयं शिक्षणा-

दिकं भागवतसम्प्रदायानुरूपं चक्रुः. अथ योग्ये समये श्रीमदाचार्यचरणास्तावुपनीय वेदाभ्यासार्थं समीचीनान् गुरूनुपायुंजत. तावपि शीघ्रमेव सकलवेदशास्त्रपारंगतौ विद्वद्वरावभूताम्.

(३)

एवं भगवदार्चायाः सातत्यचिन्ता श्रीगोवर्धनधारिणा पुत्रद्वयं वितीर्य दूरीकृतेति परमसंतोषभाजः श्रीमदाचार्यचरणास्तद्दर्शनार्थं काशीक्षेत्रान्निर्गत्य व्रजभूमिमागन्तुं मनश्चक्रिरे. न्यवेदयंश्च सर्वतो दूतमुखेन तं संकल्पं स्वशिष्येभ्यः. ते च चिरादेव श्रीमदाचार्यचरणानां चरणारविन्ददर्शनार्थमुत्सुका व्रजयात्रायां भविष्यन्ति नानाविधानि कौतुकानि द्रष्टुं सत्वरमुपागमन्. प्रायो बह्वः शिष्यसंघाः काशीमेव समागत्य तत एव श्रीमदाचार्यचरणैः सह व्रजमाययुः. श्रीमदाचार्यचरणाश्चागणितशिष्यमंडलीभिः समं व्रजं गन्तुं निर्ययुः. यदा च प्रौढप्रतापाः श्रीमद्वल्लभाचार्यचरणा भगवतो दर्शनार्थं काशीतो निर्गतास्तदा तेषां सेवाविधानार्थं राजानस्तथा भूतलकुबेरायमाणा धनिका जना अहमहमिकयाऽग्रेऽगच्छन्. श्रीमदाचार्याश्च प्रयागं प्राप्य तत्र महायागं विधाय बहुब्राह्मणभोजनमकार्षुः. नानादेशेभ्यः समागतेभ्यो विविधविद्यापरिगतेभ्यो विद्वद्वरेभ्यः प्रभूतां दक्षिणां वितीर्य तान् संतोषयामासुः. तेऽपि भूदेवा अनेन सत्कारातिशयेन परं सन्तुष्टास्तेषां यशः प्रसृतं चक्रुः. ततोऽपारशिष्यगणैः समं ते परमभागवताः श्रीमदाचार्यचरणाः श्रीभगवतो गोवर्धनधारिणः श्रीनाथस्य दर्शनार्थमत्युत्कण्ठिता अतित्वरया समागच्छन् व्रजस्य समीपं देशं. अथ तत्रैव सर्वं राजकीयमैश्वर्यं हस्त्यश्वादिकं स्थापयित्वा महति प्रत्यूषे शिष्यगणैः समं व्रजं गन्तुं निरचिन्वन्. तदानीं

सायंसंध्याया उपासनार्थमेकाकिनः स्थिताः श्रीमदाचार्यचरणा अतिमनोहरं सकलत्रिभुवनसौन्दर्यसारभूतं, स्थानेस्थाने मधुरसहकारसमूहवर्धितं, विकचकुसुमस्तबकालंकृतनवमल्लिकाभिः, धान्यप्ररोहश्यामलैः प्रमत्तवृषभहुंकारनादितैः क्षेत्रैः, अतिमधुरचरणनूपुरशिञ्जितग्रहणतत्परहंसकदम्बकविघ्नितगमनाभिर्गोपीभिः, वेणुनिनादश्रवणव्यग्रत्यक्तरोमन्थेन धेनुकेन, धेनुनिनादमिश्रेण गोपालानां गीतध्वनिना, तासां त्रैलोक्यवंद्यानां व्रजभूमीनां परिबृंहितं सौन्दर्यं वीक्ष्य परं मुदिताः क्षणमात्रं विगतदेहाभिमाना वैकुण्ठनिवाससौख्यमलभन्त. प्रमुदितहृदयकमलास्ते परमात्मानमित्थमस्तुवन्— सकलचराचरपालक ? दयानिधे ? भक्तवत्सल ? श्रीराधारमण ? त्वं हि नो भक्तानां केवलः शरणं. यदा हि सती पांचाली कौरवसभायां दुर्योधनस्याज्ञया दुष्टेन दुःशासनेन नितरां पीडिता वसनापहरणेन लज्जापयितुमिष्टा तदा त्वमेवासंख्यकरः वस्त्रदानेन तां ररक्षिथ ? नाथ ? यदा नक्राक्रान्तं गजेन्द्रं त्यक्त्वा सर्वे सुखबान्धवास्तदीया दायादा अन्यत्र जग्मुस्तदा तु एकाकी अनाथो गजेन्द्रस्त्वामेव स्वरक्षणार्थमयाचत. तदापि त्वमेव तमपालयः, यदा च दुष्टः कंसः सतीं देवकीं निरपराधां निष्कारणमपीडयत्तदाऽपि त्वमेव तस्याः संभूतो नाम भूत्वा तमनाशयः. नाथ ? एवं स्वाश्रितरक्षणे सदैव जागरूकेऽपि त्वयि केचन विषयोपभोगमदोन्मत्तास्त्वामसन्तमेव वदन्ति. मन्ये नायं तेषामपराधः किंतु तदीयस्याज्ञानस्य. यथा हि नेत्रहीनः प्रौढप्रकाशं सकलजगत्कर्मसाक्षिणं सूर्यमपश्यन्नसन्तमेव तं वदति तथैवेमेऽज्ञानिनो जना अनादिविषयवासनादूषितचेतसस्त्वां द्रष्टुमपारयन्तोऽसन्तमेव वदन्ति. न

तदुक्त्या सन्तो दूयन्ते. परन्तु भक्तास्तेषामज्ञानमपहर्तुं त्वां भूयोभूयः प्रार्थयन्ते. सकलपालके त्वयि ते न विश्वसन्तीत्यत्रापि कारणं तेषामज्ञानमेव. त्वमेव हि समये समयेऽवतीर्य भक्तगणमानन्दयसि. तथा रक्षसि च प्राणिजनस्योन्नतिकरं भक्तिमार्गं. सर्वथा त्वमेव सर्वेषां जीवानां प्रेममयी माता. यथा हि विनीतानिवाविनीतानपि स्वपुत्रान् माता पाति तथैव त्वमपीति. इत्थं चिरादेव श्रीगोवर्धनधारिणं स्तुवन्तो ध्यायन्तश्च तस्थुः. रात्रौ च महति प्रत्यूषे समुत्थाय स्नात्वा श्रीगोवर्धनधारिणो दर्शनाय गन्तुं निश्चित्य शिष्येभ्यः स्वनिश्चयं न्यवेदयन्.

अथ कथमपि सा दीर्घदीर्घा रात्रिः प्रलयकालरात्रिरिव दुःखदा समाप्तिं ययौ. शुभसमयं समागतं बोधयन्तीव पक्षिसंहतिः किलकिलशब्दैः सकलं भुवनं मुखरमकरोत्. सा कृष्णरूपधरा रात्रिः पूतनेव कृष्णदर्शनभीता शनैःशनैरपासरत्. आकाशपटलस्थस्तारागणो रात्रिसहचर इव मन्दतेजा बभूव. अचिरादेव समागच्छतः सूर्यनारायणस्याग्रदूतिरिवाथवाऽचिरादेव समागच्छतः सूर्यकान्तस्य स्मेरमुखश्रीरिव प्रभा प्राचीं दिशमुज्ज्वालयामास. श्रीगोवर्धनधारिणः श्रीनाथस्य दर्शनार्थं समुत्सुका भक्तगणा इव सर्वा अपि धेनवस्तं पर्वतं गन्तुमारभन्त. गोप्योऽपि सानन्दं भगवतो गुणान् गायन्त्यो दधि अमथ्नन्. सौभाग्यवत्यो गृहिण्यो वेलातिक्रमभीताः संमार्जनकर्म समारभन्त. अतिनिर्मलसलिलाया महापापिजनपापदूरीकरणवित्ताया भगवच्चरणारविन्दस्पर्शपरिपूताया यमुनायाः सर्वेऽपि जलावतारपथा भावुकैर्जनैर्व्याप्ता अभवन्. अतिनिबिडाज्ञाननिर्मुक्तं ज्ञानिहृदयमिव घनान्धकारमुक्तं सर्वमपि ज-

गत् प्रसन्नतां भेजे. श्रीमदाचार्यचरणास्तु सततं श्रीगोवर्धनधारिणः श्रीनाथस्य प्रबलया दिदृक्षया रात्रावप्यलब्धनिद्राः समुपस्थितं प्रभातकालं स्वसोदरमिवाभिनंद्य सत्वरं श्रीकालिन्द्या अतिपवित्रे सलिले कृतावगाहनाः संध्यामुपास्य श्रीनाथस्य दर्शनार्थं प्रातिष्ठन्त.

श्रीमदाचार्यपादान् श्रीगोवर्धनगिरिं प्रति प्रस्थितान्निशम्य सर्वोऽपि व्रजवासी जनस्तस्य श्रीगोवर्धनधारिणः श्रीमदाचार्यपादैः समं संमेलनस्य शोभां द्रष्टुं गिरिराजमधावत्. तेन प्रायः सकलमपि व्रजस्थानं रिक्तमभवत्. श्रीमदाचार्याश्च भागवते व्यासोक्तानि श्रीकृष्णस्य लीलास्थानानि पश्यन्तो भक्त्यतिरेकेण विस्तीर्णनयनकमलाभ्यामानन्दाश्रुपटलं विसृजन्तस्तत्समावस्थैरपि शिष्यगणैः कर्तव्यबुद्ध्या दर्शितमार्गा गिरिराजस्योपत्यकामाययुः. तत्र च समागमनश्रमापनोदाय भगवता श्रीनाथेन प्रेषित इव विकचकुसुमपरिमलमधुरो गिरिनिर्झरशीकरवाही पवनो मन्दंमन्दं वहन् श्रीमदाचार्याणां शैलावरोहपरिश्रमक्लेशं दूरीचकार. श्रीमदाचार्यचरणाश्च दूरादेव स्वल्पस्यापि महायशसः श्रीगोवर्धनधारिदेवालयस्य वैजयन्तीं प्रेक्ष्य कृतसाष्टांगप्रणिपाताः परं प्रेम्णा धावन्तो वेगेन तं त्रैलोक्यनाथमपि भक्तसेवकं दुर्लभमपि भक्तिसुलभं गोवर्धनधारिणं कण्ठे जगृहुः. भगवान् श्रीगोवर्धनधार्यपि चिरविरहजन्यं दुःखमिवानन्दाश्रुपटलं व्यसृजत्.

श्रीमदाचार्याश्च तत्रैव निवसन्तो भगवतः सेवां व्यधुः.

(४)

अथ शीघ्रमेव द्रव्यसंपादनार्थं दक्षिणां दिशं गतः स पूर्णमल्लस्ततो रत्नानि चन्दनकाष्ठानि च गृहीत्वा प्रत्यागत्य स्वदेशे तत्सर्वं

व्यक्रीणात्. अस्मिन् व्यवहारे सोऽपारं धनं लेभे. तत्सर्वमपि धनं परमात्मना प्रदत्तमिति मन्वानः स श्रेष्ठी पूर्णमल्लः सत्वरं तेन धनराशिना समं तत्रैवाजगाम. आगतं तं वीक्ष्य श्रीमदाचार्यचरणाः सन्तुष्टा अवशिष्टस्य देवालयस्य विधानार्थमनुमितिं दर्शयामासुः. स च परमभागवतः श्रीगोवर्धनधारिणः सेवाविधाने परमदक्षः शीघ्रमेव सर्वं देवालयं पूर्णमकरोत्. प्रथमतः पाषाणमयं तद्विधायोपरि सर्वमपि चन्दनमयं व्यतानीत्. तेन सर्वासु दिशासु तस्य पूर्णमल्लस्य भक्तिः समं तच्चन्दनगन्धेन प्रासरत्. श्रीमदाचार्यपादा अपि तस्मिन्नतिसुन्दरे देवालये श्रीनाथं स्थापयित्वा वर्षपर्यन्तं तस्य सेवाविधिं तन्मनोरथानुरूपं विधाय सर्वं व्यवस्थापयन्. स महाभागवतः पूर्णमल्लश्च तस्मिन् देवालये प्रतिष्ठितं तं श्रीगोवर्धनधारिणं विलोक्य परं प्रसन्नः स्वजन्म सफलं मेने. यस्मिन् दिने श्रीमद्वल्लभाचार्याः स्वयं भगवतः सेवां व्यधुस्तस्मिन् दिने स पूर्णमल्लो भगवतः संमुखमुपविष्टो नितान्तमहृष्यत्. तं च प्रसन्नवदनकमलं परमभक्तं समीपस्थं वीक्ष्य श्रीमदाचार्यचरणाः प्रत्यवदन्—वत्स ? पूर्णमल्ल ? त्वया खलु स्वधनस्य सम्यक् व्ययः कृतः. परिवर्तिनि संसारे कस्य वा धनमेकान्ततो दृष्टम्. यथाह्यनिशं भ्रमतो घटीयंत्रस्य क्षुद्रा घटा अधोगता गृहीतजला अपि उपरिष्टात्समागता रिक्ता एव भवन्ति तथैव प्राक्तनसुकृतराशिना लब्धद्रव्यनिचया जनाः किमपि अकुर्वन्तः समाप्ते सुकृते पुनरपि निर्धना एव भवन्ति. तत् धीमता नरेण त्वयेव चंचलाद्धनादचंचलं सुकृतं यशश्च संपादनीयं. एतच्च मन्दिरं तथाऽयं वृत्तान्तो यावत्स्थास्यति यावच्च भगवद्भक्ता इहागत्य भगवन्तं गोवर्धनधारिणं सा-

क्षात्कृत्य सन्तुष्टा अपारं सुकृतं लप्स्यन्ते तावत्ते यशः स्थिरं भवेत्? अस्तु. त्वया खलु महदिदं कार्यमनुष्ठितं तेनाहं परं सन्तुष्टः. तत्कथय किं तेऽभीष्टं करोमि. यदिच्छसि तन्निःशंकं वद. सर्वथा ते मनोरथमहं पूरयामीति.

स च भक्तवरः पूर्णमल्लो लौकिकविषयकामनारहितो मुकुलितहस्तकमलः सविनयमवदत्. प्रभो? अहं च न वांच्छामि लौकिकं विषयजातं. केवलं मया महता प्रयत्नेन समानीतः परमसुरभिर्मलयचन्दनः समं कतिपयैः सुगन्धिभिर्द्रव्यैरुपेतो भगवतः श्रीनाथस्य गात्रे स्वहस्तेन समर्पणीय इति मनीषा वर्तते. यदि नात्र किमपि अन्यथा तदेमां मनीषां पूरयितुं श्रीमदाचार्यपादाः प्रभवन्तीति. इमां तदीयां मनीषां निशम्य सन्तुष्टाः श्रीमदाचार्यचरणास्तथाकर्तुमनुमुमुदिरे. तेन स भाग्यशाली पूर्णमल्लः स्नात्वा यथाविधि महता प्रेम्णा तेनापूर्वेण चन्दनगन्धेन सर्वं परमपवित्रं श्रीगोवर्धनधारिणः कलेवरं पूजयामास. ततोऽतिदुर्लभैर्मुक्तादिरत्नहारैस्तं भूषयामास.

परस्मिन् दिने श्रीमन्तः परमसंतोषेण आचार्यचरणास्तद्भगवतो देहादवतारितं चन्दनं तस्मै समर्प्य स्वहस्तेन तस्मै बहुमूल्यं नेपथ्यं व्यतरन्. तद्गृहीत्वा स पूर्णमल्ल आत्मानं कृतकृत्यममन्यत.

एवं विरचितगोवर्धनधारिप्रतिष्ठापनास्तं पूर्णमल्लमनुगृह्य भगवतः सेवाविधिनियमांश्चक्रुः. तत्र मुख्यतः श्रीभगवतः पाकशालायां कमपि परमभक्तं नियोक्तुमिच्छन्तः श्रीमदाचार्यपादास्तं सदूपांडेनामकं भक्तं गोपालं पुनरवदन्. परन्तु सोऽवदत्. वयं न ब्राह्मणा येन पाकसिद्धिः समीचीना न भवेत्. तदित्थं भवतु—अत्र च के-

चन वंगीया ब्राह्मणास्तत्रभवतश्चैतन्यस्य शिष्या निवसन्ति. ते च भगवदाराधनोत्सुका अपि. यदि आज्ञा स्यात्तदा तानाहूय पृच्छामि इति. श्रीमदाचार्यचरणैराज्ञप्तः स तानाहूय तेभ्योऽदर्शयत्. तानपि परमवैष्णवान् वीक्ष्य सन्तुष्टाः श्रीमदाचार्यास्तानेव पाककर्मणि कुशलान् श्रीनाथस्य पाकशालायां नियोजयामासुः तेषां च मुख्यं माधवेन्द्रपुरीनामकं वैष्णववरं चक्रुः. एवं सर्वत्र योग्यान् भगवत्सेवाविधानदक्षान्नियुज्य तेषां योगक्षेमार्थं तस्मात् श्रीनाथस्य प्रसादादंशान् व्यतरन्. तेऽपि परममोदेन तं स्वं स्वं नियोगं परिपालयन्त आनन्देन श्रीनाथमसेवन्त.





# ११ पुष्टिमार्गप्रसारः

१ ग्रंथनिर्माणम्.
२ पुष्टिमार्गतत्वानि.
३ अन्यभक्तिमार्गतोऽस्य वैलक्षण्यम्.
४ अस्यैव सर्वथा सेवनीयत्वे कारणानि.

( १ )

एवं श्रीनाथप्राकट्यं तथा तदीयं रमणीयं देवालयं विधाय श्रीमदाचार्या अज्ञलोकस्य मनसि भक्तिबीजान्यवपन. तानि च प्रतिदिनं क्रमेणांकुरशालीनि सर्वेषामपि भक्तानां चेतांसि अमोदयन्त. प्रतिदिनं वर्धमानं श्रीगिरिराजे श्रीनाथस्य दर्शनार्थं समागच्छतामतिदूरदेशवासिनां जनानां समुदायं प्रेक्ष्य पूर्णमल्लप्रभृतयः श्रीनाथस्य सेवकाः परमतुष्यन्. अन्येऽपि बहुकालं दुर्वृत्ता अपि जनाः सहसा दुराचरणानि विहाय सुवृत्तयोऽभवन्. किंबहुना यथा प्राभातिकस्य सूर्यनारायणस्य केवलं प्राच्यामेव वर्तमानस्यापि प्रभा सर्वत्र प्रसरति तथैव गिरिराजे वर्तमानस्य श्रीगोवर्धनधारिणः श्रीनाथस्य महिमा सर्वत्र प्रासरत्. तेन समाकृष्टहृदया अगणिता भक्तगणाः प्रतिदिनमागत्य तं साक्षात्कृत्य स्वजन्म सफलं चक्रुः.

इदं सर्वमालोच्य सन्तुष्टाः श्रीमदाचार्यचरणा मनसि चक्रुः 'मदीयावतारकृत्यस्यार्धं तावत्समाप्तमेव. प्राय इह जगतीतलेऽज्ञानिन एव बहवः' तेषामुद्धारार्थमतिसरल एव मार्गः श्रेयान? नास्माद्भक्तिमार्गादन्यः सुलभो मार्गः प्राणिनां भाग्योदये! तस्मादिदं समीचीनमेव संवृत्तम्. परन्तु अस्य मार्गस्य रक्षार्थं निर्विघ्नतासंपत्त्यर्थं च विद्वद्वर्गोऽपि साहाय्यत्वेन संपादनीय एव. विद्वांसश्च शास्त्राभ्यासातिरेककठोरहृदया न सहसा प्रेममये भक्तिमार्गे श्रद्धधते. ते च सदैव तर्काभ्यासरतास्तर्केणैव सिद्धं वस्तु आदरयन्ति. तत एव कारणात् परमप्राचीनैर्व्यासदेवप्रमुखैर्महर्षिभिर्ब्रह्मसूत्रप्रभृतयो ग्रंथाः कृताः. तदुपरि भाष्यादयश्च नूतनाः सहस्रशो ग्रंथाः संभूताः. यथाचास्मत्पूज्यैर्व्यासदेवैर्भागवतं विधायाज्ञजनानामुपकारः कृतः, ब्रह्मसूत्राणि निर्माय विद्वांसोऽनुगृहीतास्तथैव मयाऽपि करणीयम्. साम्प्रतं हि अज्ञजनानां कृतेऽयं भक्तिमार्गः प्रचालित एव, विद्वज्जनसंग्रहार्थं ग्रंथनिर्मितिरपेक्ष्यते साऽवश्यं सम्प्रति विरचनीया.

अपिच—यद्यपि विद्वज्जना अतिविरलाः, अज्ञा एव जना बहवस्तथापि ते विद्वांसस्तानज्ञजनान् स्ववशानेव विदधति. प्रायः सर्वत्रैव देशे सुबहवोऽपि अज्ञजना अल्पविज्ञवशा एव दृश्यन्ते. तन्मतिमता नरेण स्वकार्यस्य सिद्ध्यर्थं यथाऽज्ञजनसंग्रहोऽवश्यं क्रियते तथैव विद्वज्जनसंग्रहोऽप्यवश्यमेव कर्तव्यः. यस्तु विदुषोऽल्पसंख्याकान् मत्वा तत्संग्रहे समुदास्ते स कदाऽपि यशस्वी न भवति. प्रत्युत बलवानपि तैराक्षिप्तः समूलं नश्यति. विद्वांसश्च यथा विद्ययैव सन्तुष्यन्ति न तथाऽन्येन केनाप्युपायेन. तस्मादधुना ग्रंथरचना विधेयेति.'

विचिन्त्य चैवं श्रीमदाचार्यचरणाः परमप्रबलानां परमात्मविरोधतत्पराणां कर्मकाण्डवादिनां पूर्वमीमांसकानां स्वमार्गविरोधित्वं मनसिकृत्वा प्रथमतस्तदीयप्रमाणभूतेषु जैमिनीयेषु सूत्रेषु भाष्यमकुर्वन. तत्र यथा कृत्स्नस्य वेदस्य परमात्मसेवायामेव तात्पर्यं तथा सम्यग् यथाशास्त्रं प्रदर्शयामासुः. ततश्च सकलमान्येषु उपनिषद्व्याख्याभूतेषु अगणिताचार्यवरकृतव्याख्यानेषु श्रीवेदव्यासप्रणीतेषु ब्रह्मसूत्रेषु 'अणुभाष्यं' नाम सर्वत्र विश्रुतं स्पष्टालौकिकप्रतिभं भाष्यं चक्रुः. वाचकाः ? इदानीमपि सन्ति ब्रह्मसूत्रव्याख्यात्वेन प्रसिद्धानि द्वादशभाष्याणि तथापि भक्तिरसस्य परिपोषकं परमात्मशरणीकर्तव्यताबोधकमन्यदणुभाष्यान्नास्ति भाष्यम. श्रीमदाचार्यचरणानामिमां दिव्यां ग्रंथनिर्मितिं निरीक्ष्य तदानींतनाः सर्वेऽपि विद्वांसः परं विस्मिता अभवन. श्रीमदाचार्यपादैरस्मिन् ग्रंथे ये ये खलु अन्यैर्भाष्यकारैरुत्प्रेक्षिता दोषास्ते सर्व एव निरस्ताः. प्रतिपादितं च सर्वैरपि प्राणिभिः स्वश्रेयसे परमात्मा श्रीनाथ एव संसेवनीय इति. तादृशभक्त्यंकुरस्योत्पादनाय तपश्चर्यादिकमपि कथमाचरणीयमिति तत्रैव सम्यक् निरूपितम इत्थं ब्रह्मसूत्रेषु व्याख्यां विधाय श्रीमदाचार्यचरणाः सर्वपुराणसारभूतं निबन्धाख्यं प्रबन्धं विरचयामासुः. तत्र साकल्येन भक्तिप्रकारांस्ते वर्णयामासुः. तं विधाय सकलश्रुतिस्मृत्यादिप्रमाणैरादृतं भक्तिरसमयं सकलसनातनधर्मानुयायिभिः शिरोधृतं भागवतं व्याचक्रुः. पाठकाः ? श्रीमदाचार्यचरणानां हृदयकमले भगवतः श्रीगोवर्धनधारिणः श्रीनाथस्य भक्तिः कियत्यासीदिति तैर्लिखिता श्रीमद्भागवतटीका सुबोधिन्येव बोधयति. श्रीमदाचार्यचरणानां व्याख्यानरीतिमवेक्ष्याधुनिका अपि

जना नितरां विस्मयन्ते. तत्र तत्र स्थलेषु संदेहास्पदेषु संशयनिवारणार्थं कृतानि व्याख्यानानि विलोक्य विद्वानपि पाठकः परं विस्मयमापद्यते. एवं नानाविधानि स्तोत्राणि चक्रुः. इत्थं च ब्रह्मसूत्रादिषु भाष्यादिकं विधाय विद्वज्जनः संगृहीतः. श्रीमद्भागवतादिषु च व्याख्यां विधाय भावुको जनोऽनुगृहीतः. बान्धवाः ? इह जगतीतले यद्यपि विद्वांसो विरलास्तथापि तदपेक्षया भगवद्भक्ता अतिविरलतमा एव. तेषामर्थे श्रीमदाचार्यचरणैः सुबोधिनीटीकाऽतिसुगमा कृतेत्यत्र न संशयः. प्रसंगतः स्थाने स्थाने वादिनिराकरणमपि कृतमिति ज्ञेयम्. अस्तु. प्रकृतमनुसरामः.

( २ )

निरूपिता श्रीमदाचार्यचरणानां ग्रंथनिर्मितिः संप्रति तैरंगीकृतस्य पुष्टिमार्गस्य तत्वानि निरूपयामि. यद्यपि केवलं पुस्तकाभ्यासलब्धज्ञानलेशोऽसेवितपरमपूज्यगुरुचरणारविन्दो मादृशो जन्तुः क, क चागणितैर्भक्तशिरोमणिभिः स्वीकृतः पुष्टिमार्गस्तथापि केवलं स्वरूपज्ञानार्थं यथाशक्ति प्रयते.

( १ ) श्रीमदाचार्यवरप्रोक्तस्य पुष्टिमार्गस्येदं मुख्यं तत्वं यत् निष्कामतः श्रीहरेः सेवा. यथा हि सतीष्वपि अन्यासु देवतासु पतिव्रतानां स्वपतिरेव शरणं तथा भगवद्भक्तानां कृते सत्स्वप्यन्येषूपायेषु श्रीनाथ एव शरणं. तादृशभक्त्यविरोधेन हि सर्वत्र सांसारिकेषु वा वैदिकेषु वा कर्मसु प्रवृत्तिः. अत्यल्पमिदमुक्तं. वस्तुतस्तु—यद्यत् श्रीहरेः सेवाविरुद्धं स्यात्तत्सर्वमेवानिष्टं मत्वा हेयमिति तात्पर्यं. इह जगतीतले येकेचनानिष्टा वा सुखदायिनो वा प्रसंगाः स्युस्तत्र श्रीभगवत इच्छैव कारणमिति मत्वा सर्वथा श्रीहरिभक्ति-

रेव करणीया. स च त्रैलोक्यनाथः श्रीनाथः सर्वमपि अनिष्टजातं स्वभक्तानां दूरीकरिष्यतीति विश्वासोऽपि करणीय एव. इह भारतवर्षेऽद्यावधि ये खलु साधवो वा भगवद्भक्ता वा जातास्तेषामिदमेव तत्वमासीद्यत् सत्स्वपि लोकोद्धाररूपकार्यस्य बहुपूपायेषु ते भगवन्तमेव शरणमकुर्वन्. यथाहि लौकिका जनाः कस्यापि कार्यस्य सिद्धये नानोपायान् कुर्वाणाः सिद्धिमलब्ध्वा विरमन्ति निराशा वा स्वघाताय प्रवर्तन्ते न तथा भगवच्छरणाः साधवः. ते तु सततमुद्यमशालिनो भगवन्तमेव स्वकार्यसिद्धिकारणं मन्वानाः फलस्याप्राप्तावपि अनुत्सुका न भवन्ति. अतएव जगति ये ये धर्मपथा वा ज्ञानमार्गा वा प्रचाल्यमाना दृश्यन्ते ते सर्वेऽपि एभिरेव साधुवर्यैर्भक्तशिरोमणिभिः प्रचालिताः. नैकोऽपि पशुवद्विषयप्राप्तौ लौकिकानेव स्वबुद्धिपरिकल्पितानुपायान्प्रयुंजता लौकिकेन—मानवेन प्रचालितो दृश्यते. तस्माद्यस्यकस्यापि कार्यस्य सिद्धौ सर्वथा परमात्मेच्छैव कारणमिति मतिर्निसंशयं प्रबलं कारणम्. इयमेव हि महामान्यस्य श्रीमद्वल्लभाचार्यचरणप्रकाशितस्यानादेः पुष्टिमार्गस्यादिमं तत्वम्.

२ द्वितीयं तत्वं खलु भगवदाराधना. सकलज्जगच्चालकः परमात्मा श्रीहरिः सर्वदा सर्वस्य कल्याणायैव प्रवर्तते. न खलु तस्य कदाचिदपि क्वचिदपि काऽपि प्रवृत्तिः कस्यापि अश्रेयसे भवति. ये खलु तस्य शत्रवः कंसादयस्तानपि स स्वसाक्षात्कारकृपयाऽन्वगृह्णादेव, तदा स स्वानुयायिनोऽनुगृह्णीयादित्यत्र नास्ति संदेहलेशोऽपि. एवं सकलप्राणिगणस्य कल्याणायानिशं प्रयतमानस्य सत्यसंकल्पस्य भगवतः श्रीनाथस्य सततमाराधनैव कर्तव्या. साहि

सततमनुष्ठिता महते कल्याणाय भवति. सा च न केवलं कस्यापि कार्यस्य सिध्यै किंतु निष्कामतया. यथाहि लौकिकाः पुरुषा यत्किमपि फलं वांच्छन्तो लौकिकमेव राजानं सेवन्ते तथा न परमात्मा सेवनीयः सेवितश्च सर्वज्ञः स विमनायमानो न भद्रं करिष्यति. लौकिकश्च राजाऽज्ञः कथनं विना न जानाति, परन्तु सर्वज्ञ ईश्वरः सर्वं जानात्येव. अतस्तत्र कस्यापि कार्यस्य सिध्यर्थं न संकल्पः करणीयः. नापि तदनुरोधेन तदाराधना करणीया.

३. तृतीयं तत्वं—तस्मिन् परमात्मनि निर्विशेषं प्रेम विधेयमिति. सामान्यतः सर्वेऽपि प्राणिगणा यथा स्वस्मिन् प्रेम कुर्वन्ति स्वसंबन्धिनि वा न तथाऽन्येषु.किमत्र कारणं ?. ऋते भेदभावान्नान्यत्. भेदभावो हि मानवस्य प्रीतिं परिच्छिन्नां करोति. यत्र च भेदभावोऽपैति तत्र प्रीतिः स्वयमेव वर्धते. नचायमभेदः काल्पनिकः ? तस्य वास्तवत्वात्. अतएव श्रीमदाचार्यचरणानां शुद्धाद्वैतवादोऽभिमत इति बोध्यम्. अद्वैतवादे शुद्धाद्वैतवादे चायं विशेषो यत्प्रथमः ब्रह्मतत्वं सत्यं स्वीकुर्वाणो दृश्यस्यासत्यत्वं मायाजन्यत्वं स्वीकरोति.

श्रीमदाचार्यचरणास्तु 'वासुदेवः सर्वं' इति श्रीमद्भगवद्गीतोक्तं सिद्धान्तं स्वीकुर्वन्तो दृश्यस्य मायिकत्वं न स्वीकुर्वन्ति. यथा तथास्तु. श्रीमदाचार्यचरणानां प्रीतिनाशको भेदो नाभिप्रेतः. पुष्टिमार्गे परमभागवतः 'न मे किमपि सर्वमिदं भगवतः श्रीहरेरेव' इति मन्यमानः सर्वदा परमात्मसेवायां निमग्नो मोदते. तेन श्रीहरेरेव सर्ववस्तुरूपत्वात्तत्र निरवकाशा प्रीतिः सुलभैव.

४ चतुर्थं तत्वं तु यथा भगवान् सर्वथा भक्तानां सेव्यस्तथैव लब्धभगवदनुग्रहो गुरुरपि. यथा हि बालको निसर्गतो बुद्धिमा-

नपि गुरुसाहाय्यं विना न पण्डितो भवति, नापि स्वध्येयं लभते; तथैव मानवः संस्कृतचित्तोऽपि गुरुसाहाय्यं विना भगवतः स्वरूपं न ज्ञातुं शक्नोति. युक्तं चेदं—अन्यथा सांसारिके स्वल्पेऽपि कार्ये यदि योग्यं मार्गदर्शकं विना न वयं तत्कार्यं विधातुं प्रभवामस्तदा दुर्ज्ञेयेऽनुभवैकगम्ये परमात्मस्वरूपे कुतो न गुरुसाहाय्यापेक्षा ! सोऽपि गुरुः शिष्यविश्वाससहायस्तं शिष्यं बोधयितुं शक्नोति नान्यथा. यथा कश्चिदिभ्यो भवितुमिच्छन् मूलद्रव्यं विना न स्वेच्छां सफलयितुं प्रभवति तथैव शिष्यविश्वासहीनः सुमहानपि स गुरुस्तं शिष्यं न समुद्धर्तुं. तस्मादस्मिन् पुष्टिमार्गे यथा हि भगवान् सर्वेषां भक्तानां निरतिशयप्रेमास्पदं, तथैव तद्दर्शको गुरुरपीति बोधितम्. तेनात्र गुरोर्निरतिशयं माहात्म्यम्.

५ पंचमं तु—श्रीहरेरव्यभिचारिणी भक्तिः. यथा हि स्वामिनिष्ठः सेवकः स्वस्वामिनमेव सेवते नान्यमत्त्युत्तममपि अन्यं स्वामिनं, तथैव भक्तेन सर्वदा भगवान् हरिरेव सेव्यः. इयमेवाव्यभिचारिणी भक्तिर्नाम. यथा पतिव्रता स्वपतिं सेवमाना न स्वप्नेऽपि अन्यं पुरुषं ध्यायति, अथ ध्यायति चेत्तथा पतिव्रताशीलात् प्रच्यवते तथैव भक्तोऽपि. तस्मात्सततं यथाशक्ति महता सावधानेन भक्तैरियं सर्वकामदुघा भक्तिकामधेनुः संरक्षणीया.

वाचकाः ? सर्वश्रेष्ठोऽयं पुष्टिमार्गोऽगणितोत्तमोत्तमतत्वालंकृतः. कियद्वोदाहरामि. यथा रत्नाकरवर्णनं कृपणेन कर्तव्यं तथैव मया क्षुद्रमतिनाऽस्य पुष्टिमार्गस्य कानिचित्तत्वानि वर्णितानि. विस्तरभयादधुना विरमामि. यस्य चाधिकं जिज्ञासा स्यात्तेन श्रीमदाचार्यचरणप्रणीता आकरग्रंथा एव द्रष्टव्याः.

( ३ )

अस्मिन् भारते वर्षे चत्वारः खलु वैष्णवाः सन्ति. ते च रामानुजमाध्ववल्लभनिंबारकमतानुयायिनः. सर्वेऽप्येते कर्मकाण्डप्रामाण्यं स्वीकुर्वन्तोऽपि भक्तिमार्गमेव मानवानां श्रेयस्करं वदन्ति. यद्यपीदं सर्वं सत्यं तथापि श्रीमन्महाप्रभुवल्लभाचार्यस्थापितस्य पुष्टिमार्गस्यान्येभ्यो महद्वैलक्षण्यं. तथाहि. श्रीरामानुजमतानुयायिनः श्रीवैष्णवा विशिष्टाद्वैतवादिनो भेदं तात्त्विकमेव मन्यमानास्तादृशीं प्रीतिं परमात्मनि कर्तुं न प्रभवन्ति यादृशीं 'वासुदेवः सर्वं' इति मन्यमानाः पुष्टिमार्गानुयायिनः कुर्युः. माध्वाश्च सत्यमेवात्यन्तिकद्वैतवादिनः. तेषु च नाद्वैतस्य लेशोऽपि. निम्बारकाश्च द्वैताद्वैतवादिन इति शुद्धाद्वैतस्याभावान्न निरतिशयप्रेम्णोऽवसर एषु त्रिषु वैष्णवेषु. ये च शांकरा अद्वैतवादिनस्ते तु 'अहं ब्रह्मास्मि' इति मन्यमाना उपास्योपासकभावमेव समूलमुच्छिन्दन्ति. तेन सर्वथा भगवदनुग्रहशालिनोऽस्मान् पुष्टिमार्गान्नान्य उत्तमोऽन्यो भक्तिमार्गः

किंच—रामानुजमतानुयायिनो भक्तिं मोक्षसाधनमाहुः. तथैव माध्वादयोऽपि. श्रीमद्वल्लभाचार्यानुयायिनस्तु भगवतः प्रसाद एव भक्तेः फलमाहुः. वस्तुतस्तु अभ्युपगम्येदमुक्तं. परमार्थस्तु पुष्टिमार्गे भगवद्भक्तेः फलमेव नास्ति. यथाहि सदपि सततं वर्तमानयोः श्वासोच्छ्वासयोर्जीवनं न फलं किंतु लाक्षणिक्या वृत्त्या तथोदीर्यते एवं पुष्टिमार्गानुयायिनो महाभागवतस्य भक्तेः फलं भगवत्प्रसाद इति. यो हि परमवैष्णवः किमपि फलमनपेक्षमाणः परमात्मानं श्रीहरिं सेवते तदुपरि भगवान् स्वयमेव कृपां करोति. यथा वा स्मयमानस्य

वाऽस्मयमानस्य वा बालकस्योपरि समाना मातुः कृपा, मातृसंतोषाय स्मितविधानं तु बालकस्य कर्तव्यं, तथैव प्रकृतेऽपीति ज्ञेयम्. तेन महद्वैलक्षण्यमस्य पुष्टिमार्गस्यान्यभक्तिमार्गत इति संक्षेपः.

( ४ )

पाठकाः ! निरूपितमस्य पुष्टिमार्गस्यान्यभक्तिमार्गतो वैलक्षण्यं. संप्रति अस्यैव सेवनीयत्वे कारणानि उदाहरामि. मानवस्य जातमात्रस्य यस्मिन् कस्मिन्नपि तत्वे श्रद्धा भवत्येव. तां च श्रद्धां क्रमेण दृढीभावमापद्यमानां पण्डिता जना धर्मशब्देन व्यपदिशन्ति. तत्र प्रथमं धर्मस्य स्वरूपं प्रस्तावनोक्तरीत्या कर्ममयमेवासीत्. यच्च प्रमाणीभूतेन वेदेन बोधितं कर्म तत्कर्तव्यमेव न तत्र फलजिज्ञासाया अवसर इति खलु तत्स्वरूपम्. ततश्च विचारशीला मानवश्रेष्ठा यथायथाऽधिकं विचारयामासुस्तथातथा केवलमन्धवत्कस्मिन्नपि श्रद्धापरपर्याया प्रामाण्यबुद्धिर्न कमपि चिरं प्रवर्तयितुं प्रभवति यथेष्टसाधनत्वबुद्धिः. बालको हि लड्डुकभक्षणे यथा झटिति प्रवर्तते नैवं केवलं मातुराज्ञापालने. ततो मोक्षरूपसर्वेष्टसाधनत्ववादः समाययौ. तस्य च कारणं न कर्माचरणं किंतु ज्ञानमिति यदा सिद्धान्तः प्राचलत्तदा कर्मकाण्डं तदुक्तानि कर्माणि च हीनबलान्यभवन्. यदा च मोक्षेच्छया प्रवर्तितं ज्ञानकाण्डं प्रबलमभूत्तदा प्रायोऽयोग्याः पुरुषा अलसाः समाजस्थितिमदूषयन्. न ते कर्तव्यबुद्ध्या स्वस्वकर्माणि समाचरन्. तेन समाजः परं दुर्बलो दुरवस्थोऽभवत्. एतस्य सर्वस्यानर्थजातस्य दूरीकरणायायं भक्तिमार्गः श्रेष्ठैः साधुभिः प्रचालितः. अस्मिन् भक्तिमार्गे मोक्षरूपेष्टसाधनत्वमपि विद्यते कर्तव्यबुद्ध्या क्रियमाणा भगवतः सेवाऽपि. तथाचोभययोरपि कर्मकाण्डज्ञानकाण्डयोः सारभूतोऽयमिति स्पष्टमेवोक्तं भवति. अस्तु.

वाचकाः! उपरितननिरूपणेन भवद्भिरवगतमेव भवेद्यत् भक्तिमार्गस्य परमं प्रयोजनं मोक्षरूपात्यन्तिकसुखपरिदानपूर्वकं समाजसुव्यवस्थाविधानं. तत्र मोक्षस्य व्यक्तिसुखातिशयरूपत्वात् स कस्याऽपि कृपयैव संपादनीयो भवेत्. तथाच योऽस्य जगतः पालयिता श्रीहरिस्तस्य कृपयैव स संपाद्यो भवेत्. सज्जनानां स्वभावोऽयं यत्ते हीनमपि मानवं स्वसमानगुणकं विदधति. यद्येवं तदा कैव कथा परमात्मशरणीकरणे. समाजव्यवस्था च सदा सदाचरणतत्परैरेव भवति. सदाचरणं च यद्यपि सर्वत्र परमात्मसत्वं भावयन्तः साधवोऽनुतिष्ठन्ति तथापि तत्तादृशं सदाचरणानुष्ठानं न भवति यादृशं सर्वं परमात्मरूपं भावयन्तः पुष्टिमार्गानुयायिनोऽनुतिष्ठेयुः. तस्मात्सर्वत्र परमात्माऽस्तीति भावयद्भ्योऽन्यभक्तेभ्यः पुष्टिमार्गानुयायिनो निःसंशयं सदाचरणपरा इति वक्तव्यमेव. अयमत्रभावः—विषयसत्तां स्वीकृत्योदितायां पापभावनायां परमात्मनिरीक्षणभिया तस्यास्त्यागात्तादृशभावनाया अनुदय एव श्रेयानिति. तादृशभावनाया अनुदये च कारणं विषयाणां पृथक्सत्तास्वीकाराभावः. यो हि परकान्तां कान्तामभावयन् परमात्मस्वरूपामेव तां मन्यते स तां वीक्ष्य कथं पापवासनाशाली स्यात्. तस्माद्विषयसत्तां पृथक् स्वीकृत्य तत्र तत्र परमात्मसत्तां स्वीकुवद्भ्योऽन्यभक्तिमार्गेभ्यः 'सर्वं वासुदेवः' इति वदन् पृथक् विषयसत्तां च खण्डयन् पापवासनाजालं समूलं घातयन् श्रीमदाचार्यचरणैः स्थापितोऽयं पुष्टिमार्गः कस्य संतोषाय न भवेत्?

किंच—यो हि सर्वत्र परमपवित्रं सन्मान्यं स्वोपास्यदैवतं पश्यति स तत्र पापान्याचरितुं न शक्नोति प्रवृत्ताऽपि पापवासना ततो

निवर्तत इति सर्वेषामनुभवसिद्धमेव. परंतु तस्य स्वोपास्यदैवतस्यानादरभीत्या वा कोपभीत्या वा निवृत्ताऽपि चित्तवृत्तिर्न स्वोपास्यदैवते प्रीतिं समुत्पादयितुं शक्नोति. प्रसिद्धं चैतल्लोके यत् राज्ञः सकाशात्साधारणा जना बिभ्यतीत्यत्र कारणं न तेषां राज्ञि विद्यमानोऽनुरागः किंतु दण्डभयं. अपकुर्वतोऽस्मान्क्रूरदण्डो राजा दण्डयेदिति भीताः सांसारिका जना न पापमाचरन्ति. एवंस्थितेऽनुरागस्यावकाश एव न. पतिकोपभिया पतिं सेवमाना पत्नी तादृशमनुरागं न बध्नाति यादृशं सैव भीतिरहिता. तस्मात् स्वस्य पृथक् मत्वं स्वीकुर्वद्भिरन्यैरामानुजमुनिप्रभृतिभिः स्थापितेभ्यो भक्तिमार्गेभ्यः सर्वत्र 'वासुदेवः सर्वं' इतिवादी सर्वं प्रेममयं जगत्कुर्वाणोऽयं पुष्टिमार्ग एव निःसंशयं मानवानां कल्याणकरः.

अपिच—मानवा इहलोके केवलं सुखलाभार्थमेव प्रयतन्ते न दुःखलाभायेति सर्वेषां सम्मतं. तत्र जीवः खलु विषयलाभत आत्मानं सुखिनं मन्यते इत्यपि दृष्टचरं. यदि विषयत्यागस्तस्मै उपदिश्यते तदा स स्वसुखनाशमुत्प्रेक्षमाणो न संतोषेण तमनुतिष्ठति. तस्मात्तेषां विषयत्वं दूरीकृत्य यदि परमात्मस्वरूपत्वमेव तेषामुच्यते तदा सोऽवश्यं नित्यसुखी भवेत्. श्रीमदाचार्यचरणस्थापितोऽयं पुष्टिमार्गो नेतरभक्तिमार्गवद्विषयत्यागं ब्रूते नापि अद्वैतमार्ग इव विषयान्मिथ्या वदति किंतु ये खलु जगति विषया दृश्यन्ते ते नागमापायिनो जडरूपाः किंतु 'वासुदेवः सर्वं' इति श्रीमद्भगवद्गीतोक्तरीत्या सर्वे भगवत्स्वरूपा एवेति. ततोऽस्मिन्कुतोऽनिष्टस्य संभवः. बान्धवाः! अतिगूढोऽयं भक्तिमार्गः. मादृशो जन्तुश्च तं कथं वर्णयितुं शक्नुयात्. तथापि स्वल्पं साहसं कृतं. अधुना विस्तरभयादुपरम्यते.




१ काशीविजयः.

२ भागवतरीत्या संन्यासग्रहः.

३ परमहंसदीक्षया वृत्तिः.

४ भागीरथीप्रवाहप्रवेशः.

( १ )

प्रियबान्धवाः ? निरूपितं खलु पुष्टिमार्गस्य महत्त्वं. साम्प्रतं श्रीमदाचार्यचरणानां वैकुण्ठप्राप्तिं वदामि. यद्यपीदं प्रकरणं श्रीमदाचार्यचरितस्यान्तिमं, तथापि नित्यतत्वस्वरूपाणां भगवद्भक्तानां नान्तो नादिरिति न खेदस्यावसरः. अस्तु. प्रकृतमनुसरामः. श्रीमदाचार्यचरणाः पूर्वोक्तरीत्या श्रीगोवर्धनधारिणं श्रीगिरिराजे स्थापयित्वा तथा सर्वेषां परमवैष्णवानां चेतांसि समतोपयन्. ग्रंथनिर्मितिं विधाय च विदुषां चेतांसि भक्तिमार्गगामीन्यकार्षुः ततो महता संतोषेण ते स्वशिष्यगणैः समं भगवतः श्रीगोवर्धनधारिणः श्रीकृष्णस्य सेवाविधिं व्यवस्थाप्य स्वयं वाराणसीमाययुः.

तत्र च निवसन्तः श्रीमदाचार्यचरणाः स्वमातृपादानामाज्ञया त्रिंशत्सहस्रब्राह्मणभोजनसंकल्पमकुर्वन्. तद्बोधनार्थं च ते संकेतध्वजं समारोपयन्. श्रेष्ठी पुरुषोत्तमदासोऽपि तत्रानुकूलो बभूव.

तदानीं सकलभारतवर्षप्रसृतं श्रीमदाचार्यचरणानां यशःप्रकरमालोक्यापूर्वविचारसरणिमण्डितां तेषां ग्रंथरीतिं साक्षात्कृत्य मात्सर्यदोपदूषिताः केचन पण्डितंमन्याः 'काशीविजयध्वजोऽयं' इति मिथ्यैव घोषयन्तः स्वसदृशानन्यान् कोपयामासुः. ते सर्वेऽपि क्षुद्रमतयः सरोषमागत्य विवदितुमारभन्त. श्रीमदाचार्यचरणाश्च तैः समं विवदितुं शक्तानपि स्वशिष्यगणान्निवार्य स्वयमेव तान बोधयितुमुद्यता अभवन्. श्रीमदाचार्यचरणानेव वादोद्यतानवलोक्य भीतास्ते खलपण्डिताः सहसा सर्वतो गत्वा पाण्डित्यभारवाहिन उपेन्द्रमुख्यान् यतीन् वादविधानार्थं प्रार्थयामासुः. ते च पण्डिता अपि मानवस्वभावमत्यजन्तस्तत्प्रार्थनां स्वीकृत्य वादार्थं निर्णीते स्थल उपतस्थिरे. श्रीमदाचार्यचरणाश्च स्वशिष्यस्य श्रेष्ठिनः पुरुषोत्तमदासस्य पंचगंगातीरवर्तिनि विस्तीर्णे महाप्रासादेऽवसन. ते च वादार्थं समागतांस्तानुपेन्द्रप्रभृतीन् यतीन् सादरं सत्कृत्य प्रश्नान प्रष्टुमादिशन. ते च वादार्थमागता अपि प्रतिपक्षिणस्तामाचार्यपादानां दिव्यतेजःशालिनीं मूर्तिं विलोक्य खिन्ना अपमदाः केवलं जिज्ञासाबुद्ध्या कांश्चित्प्रश्नांश्चक्रुः. साक्षादग्निदेवावतारभूताः श्रीमदाचार्यचरणास्तान् प्रश्नांस्तथा व्याचक्रुर्यथा सर्वोऽपि तत्रोपस्थितो लोकसंघस्तद्भाषणं निशम्य चित्रगत इव बभूव. वादिगणमुख्य उपेन्द्रयतिश्च विमूढमतिः किमपि प्रतिवक्तुमपारयन् सत्वरमुत्थाय परमपवित्रं विविधभक्तगणशिरोधृतधूलिकं श्रीमदाचार्यचरणानां चरणसरोजं स्वहस्तयुगलेन धृतवान्. तं च शरणागतमवलोक्य परं हृष्टाः पुष्टिमार्गानुयायिनो वैष्णवा आनन्देन भगवन्नामविजयघोषं चक्रुः. श्रीमदाचार्याश्च परमोदारहृदयकमलास्तान्निषिध्य जगदुः. सकलोऽयं संसारः खलु

तत्रभवतः श्रीहरेरेव. अत्र च निवसन्तः प्राणिगणाः सर्वेऽपि तस्यैवानुचराः. तद्यदि कश्चन मोहात्सदपि तदनुचरत्वं नांगीकुर्यात्तदा सुज्ञेन स बोधनीयः. बोधितो यदि तत्प्रतिपद्यते तदा वरमेव. अन्यथा तु तस्यैव महती हानिः. तथाचान्येषु भगवदनुचरत्वं स्वीकुर्वत्सु अस्वीकुर्वत्सु वा भगवद्भक्तस्य न कोपि लाभो हानिर्वा. एवंसति किमर्थं रागद्वेषौ ? किमर्थं च तद्योतनाय विजयघोषणा ? अनेन कर्मणा भगवद्भक्ता रागद्वेषशालिन इतरजनवत्तिरस्कारार्हा भवन्ति. तस्माद्भगवद्भक्तेन सर्वदा महता सावधानेन वर्तनीयं. यस्मिन् कस्मिन्नपि कार्ये रागद्वेषौ न विधेयौ. यथा हि सूर्यो जन्मान्धैरवीक्षितोऽपि सर्वं जगत्प्रकाशयति तथा तेन सर्वे जना बोधनीयाः. तं च बोधं सांसारिका जनाः स्वीकुर्वन्तु मा वा. अनेन मार्गेण वर्तमानस्य भगवद्भक्तस्य कल्याणं जायते. एवं भाग्यशाली सोऽन्येषामपि कल्याणं कर्तुं प्रभवति इति. निशम्य चेमाममृतमयीं श्रीमदाचार्यचरणानां वाणीं तत्रस्थाः सर्वेऽपि जनाः परं समतुष्यन्. ततश्च सर्वैः काशिकैः पूजितास्ते श्रीमदाचार्यचरणा स्वसंकल्पं पूरयित्वा सर्वान ब्राह्मणान् समतोषयन्.

( २ )

एवं काशिकान्विजित्य लब्धसत्कारास्ते श्रीमदाचार्यचरणाः स्वावतारं समापयितुकामा मनसि चक्रुः. मया हि भगवतोऽतिप्रियं भक्तिमार्गं प्रसारयितुं भुवि अवतीर्णेन यथाशक्ति तत्कार्यमनुष्ठित. यथाहि अस्य भक्तिमार्गस्य कर्मकाण्डं विरुद्धं तथैव ज्ञानकाण्डमपि. परन्तु तस्मिन् मया भाष्यादिकं विधाय तत् खलु भगवतो भक्तिमेव प्रतिपादयतीति दर्शितं. यथा च भगवद्भक्तिमन्ये आश्रमाः साध-

यन्ति तथा न चरमः संन्यासाश्रमः तत्र तु शिखायज्ञोपवीतादिकं विहाय केवलं तूष्णीमवस्थानं विधीयते. तच्चानिष्टं. न च स संन्यासाश्रम एव समुन्मूलयितुं शक्यः. तस्य सकलशास्त्रसंमतत्वात्. तस्मात्सोऽपि भक्तिमार्गाविरोध्येव करणीयः. ममाऽपि सर्वं गृहस्थाश्रमकर्म समाप्तमेव. पुत्रौ च स्ववंशाधारभूतौ भगवत्सेवां करिष्यत एव. तदधुनाऽहमेव संन्यासाश्रमं स्वीकृत्य तत्रापि भगवतो भक्तिविशेषं कृत्वा दर्शयिष्यामि 'एष संन्यासाश्रमोऽपि भक्त्यविरोधीति.

विचिन्त्य चैवं श्रीमदाचार्यचरणाः संन्यासाश्रमं प्रवेष्टुं मतिमकुर्वन्. अत्रान्तरे भगवान् भवद्भिर्लीलायामागन्तव्यमिति श्रीमदाचार्यचरणानाज्ञापयामास. तामाज्ञां गृहीत्वा भूतलवसतिं स्वस्य स्वल्पां मन्वानाः शीघ्रमेव संन्यासाश्रमग्रहणाय निरचिन्वन्. ततः सर्वानपि शिष्यगणानाहूय भगवदाराधने स्वस्य ज्येष्ठं पुत्रं श्रीगोपीनाथं नियुज्य तदाज्ञया वर्तनार्थं सर्वानपि दमोदरदासादीनादिश्य तमपि श्रीनाथसेवाविधानार्थमाग्रहेण कथयित्वा संन्यासाश्रमप्रवेशाय स्वपत्न्यनुज्ञामयाचन्त. अवदंश्च-भार्ये ! इदानीमहमाश्रमान्तरं प्रवेष्टुकामोऽस्मि. गृहस्थाश्रममनुष्ठीय संतानं च संपादितं. तदिदानीं मामनुज्ञातुमर्हसि. त्वं हि जानास्येव भगवत्सेवां विना न मे किंचिदन्यद्रोचत इति.

तदिदं तेषां श्रीमदाचार्यचरणानां निश्चयबोधकं वाक्यं निशम्य दुःखाकुलाऽपि सा सती परमानन्देन संन्यासाश्रमप्रवेशायानुमतिं प्रदर्शयामास. स्वभार्याया अनुमतिं वीक्ष्य सन्तुष्टाः श्रीमदाचार्यचरणा भागवतरीत्या संन्यासाश्रमं स्वीचक्रुः.

वाचकाः ! संन्यासाश्रमस्य सामान्यतः स्वरूपं विषयत्यागरूपं. गृहस्थः पुत्रभार्यादिपरिमितपरिवारस्तस्यैव पालने सततं प्रयतमानो

न किमपि सर्वस्य जगतः कल्याणं साधयितुं प्रभवति. अतस्तस्य सिध्यर्थं चरमे वयसि अयमाश्रमः शास्त्रेण व्यपदिश्यते. युक्तमपीदं. यतः सर्वदा पशुवत्स्वपुत्रकलत्रभरणे प्रयतमाना यदा सर्वे एव मानवाः स्युस्तदा जगति परोपकारस्तथा धर्मस्य वा भगवद्भक्तेर्वा तत्वज्ञानस्य वा प्रसारः केन करणीयः! असत्सु चैतेषु अय मानवगणो द्विपादपशुसंघ एव भवेत्. तस्मान्मानवैर्नियतकालपर्यन्तमेव गृहस्थाश्रमः करणीयः. अनन्तरं सकललोकोपकाराय तेनाश्रमान्तरं स्वीकर्तव्यमेव. यथा सकलभूतात्मबुद्धिः संन्यासी जगतः कल्याणं कुर्यान्नैवं परिच्छिन्नपुत्रकलत्रादिपरिवारात्मबुद्धिर्गृहस्थः.

तत्र च संन्यासाश्रमवर्तनेऽस्ति द्वैविध्यं. तत्र केचन शिखासूत्रादिकं त्यक्त्वा केवलं परमात्मतत्वध्यानपरा न किंचिदप्यनुतिष्ठन्ति. इमं संन्यासं च स्मार्तं संन्यासं वदन्ति. अन्ये च शिखासूत्रादिकं धारयन्त एव काषायांबरवसनाः पुत्रकलत्रादिकं परित्यज्य भगवदाराधनपरा भक्तिमेवाधिक्येन समाचरन्ति. इमं द्वितीयं संन्यासं भागवतसंन्यासं वदन्ति. अनयोरुभयोरपि संन्यासयोः शास्त्रप्रमाणान्वितयोः सतोः श्रीमदाचार्यचरणाः परमभागवताः सदा भगवत्सेवामेव वांच्छन्तो द्वितीयं संन्यासविधिमेव प्रशशंसुः. युक्तं चेदं. कथमन्यथा सर्वदा भगवत्सेवाविधानमेव मानवानां परमं कर्तव्यं कर्मेति तैरुक्तः सिद्धान्तः सर्वमान्यो भवेत्?. अस्तु.

एवं निर्णीय ते परमपवित्रचरणारविन्दाः श्रीमदाचार्यचरणाः सर्वैः शिष्यैः समेताः काषायांबरधारिणः शिखासूत्रादिकं धारयन्तः त्रिदण्डशालिनः परममान्यं भागवतसंन्यासं जगृहुः. श्रीमदाचार्यचरणान् संन्यासाश्रमं प्रविष्टान्निशम्य नानादेशेभ्योऽगणिताः शिष्यसंघास्तेषां दर्शनार्थमाजग्मुः.

( ३ )

एवं संन्यासाश्रमं गृहीत्वा श्रीमदाचार्यचरणाः पूर्णानन्देति नूतनं नाम धारयन्तो भागवतसंन्यासरीत्या सर्वं दैनिकं विधिं समाचरन्तः स्वगृह एव भुंजानाः षड् दिनानि तस्थुः. ततो बहूदकाश्रमं गृहीत्वा गङ्गातीरे वसन्तः स्वसंबन्धिनां गृहेषु भिक्षां याचन्तोऽष्टौ दिनानि मोदेन यापयामासुः. ततो हंसाश्रमं प्रविष्टाः क्रमेण काशीक्षेत्रमागन्तुं प्रातिष्ठन्त. मार्गे च मान्येभ्यः परमभागवतेभ्यो भर्जितधान्यसक्तु-फलादिकमत्यल्पं भिक्षित्वा तद्भगवते निवेद्य भूतेभ्यो विभज्य दत्वा भगवच्चरणारविन्दजलमिश्रं भक्षयामासुः, अनिशं च समागतान् वैष्णवजनान् भागवतकथाः श्रावयन्तः समये समये नियतान् भगवदुत्सवान् कारयन्तो महताऽनन्देन काशीं प्राप्य हनूमान्घट्टे स्थिता रात्रिंदिवं भगवत्सेवादक्षा अभवन.

वाचकाः ! यद्यपि संन्यासाश्रम एव चतुर्थ आश्रमः. स चैक-स्तथापि तत्रोत्तरोत्तरमाधिक्यबोधनार्थमिमेऽवान्तराश्रमभेदाः कल्पि-ताः. यथा हंसपरमहंसप्रभृतयः. न चैतावता तेषां तद्भिन्नत्वं. गृह-त्यागरूपस्य सर्वत्र सामान्यरूपेणावस्थानात्. तत्र च हंसाश्रमधारिणां श्रीमदाचार्यचरणानां दर्शनार्थं सर्वेऽपि नानादेशवासिनः पुष्टिमार्गा-नुयायिनो वैष्णवगणा आगच्छन. तेन प्रथमत एव विपुलजन-संमर्दशालिन्यपि सा वाराणसी अगणितजनशालिन्यन्यैवाभवत्-सर्वेऽपि वैष्णवा रात्रिंदिवं भगवन्नामघोषं कुर्वन्त आचार्याणामभितः तस्थुः. बान्धवाः ! यद्यपि बहवः खलु काषायवस्त्रधारिणः संन्या-सिनो दृश्यन्ते. परंतु ते केवलं बाह्यत एव तथा न पुनरन्तरतः. यदा हि लोभो न त्यज्यते यदा च पुत्रकलत्रादिषु वर्तमानो मोहो न विधूयते तदा केवलं परवंचनैकफलैः काषायवस्त्रैः किं भविष्यति ? केवलं शिखासूत्रस्य त्यागेन पातकमेव लभ्यते इति मन्तव्यं. अस्तु.

एवं हंसाश्रमं प्रविश्याष्टदिनपर्यन्तं स्थितास्ते श्रीमदाचार्यचरणाः स्वावतारसमापनवेलां समीपमागतामवलोक्य परमसंतोषेण परमहंसाश्रममन्तिमं स्वीकर्तुकामास्ते सर्वानपि प्रमुखान् स्वशिष्यानाहूय तान् महता प्रेम्णा श्रीनाथभक्तिमुपदिदिशुः. जगदुश्च—वत्साः! श्रीभगवतो गोवर्धनधारिणो नियोगतोऽहमचिरादेव तल्लीलायां समाविष्टो भविष्यामि. अस्मिन भूतलेऽपि तस्यैवाज्ञातस्तदीयां भक्तिं प्रसारयितुमागतः. अत्र संसारे सकलदुःखमये विषयवासनाजालभयंकरे केवलं सुखदायिनी हरिभक्तिरेव. एषा च मातेव वत्सं स्वाश्रितं पाति. न खल्वेषा केवलं पारलौकिकमेव फलं स्वर्गादिकं ददाति किंतु ऐहिकमपि पुत्रकलत्रस्वास्थ्यादिकं तथा धनधान्यादिसमृद्धिरूपमपि ददाति. तस्मान्मानवेन केनाऽपि कारणेन परमात्मभक्तिर्न त्यक्तव्या. यो हि मदोद्धतो वा विषयलालसासक्तो वा परमात्मानं न भजते, मन्ये स दुःखं जीवति. प्राक्तनपुण्यसंपादितं सुखलवं भुञ्जानस्तन्मोहेन यदा तत्कारणं परमात्मभक्तिं विस्मरति तदा स बीजभोजी कृषीवल इव परं विपद्यते. तत् वत्साः! भवद्भिः कस्मिन्नपि संकटसमये परमात्मभक्तिर्न हातव्या. स्वयमनुष्ठीय च परान्प्रति उपदेष्टव्या. सज्जनस्य स्वभाव एवेदृशो यत्स चन्दन इव सर्वदा परसन्तोषार्थं प्रयतते नतु मक्षिकेव स्वयं विनष्टः परान्नाशयति. विशेषतश्च पुष्टिमार्गानुयायिभिर्जगत्कल्याणाय महान् यत्न आस्थेयः. यतस्ते एव सततं परोपकारान् कुर्वन्ति ये दुःखराशिभिराहन्यमाना अपि न स्वोद्योगान्मुंचन्ति. एतादृशास्त एव भवन्ति ये सर्वं खलु परमेश्वराधीनमिति मन्यन्ते. पुष्टिमार्गस्येदं प्रधानं तत्वं यत् सर्वमपि सुखदुःखादिकं सकलचराचरपालकस्य श्रीहरेरिच्छाधीनं. स्वतन्त्रेच्छः स यदिच्छति तत्करोति. न तत्र जिज्ञासायाः कस्या-

प्यस्ति अधिकारः. मानवेन खलु स्वसुखदुःखोदासीनेन सर्वथा परकल्याणायैव यतनीयं. मानवजातिकल्याणं च केवलं परमात्मभक्त्यधीनमिति मया भूयोभूय उक्तमेव. तत् सावधाना भूत्वा यावज्जीवं परमात्मभक्तिं कुरुत. परमात्मानुग्रहादन्यं लाभं न मनुत. मादृशान् सेवकान् श्रीहरिर्भूयोभूयो मानवजातिकल्याणाय प्रेषयेदेव तथापि परमप्राचीनमिमं पुष्टिमार्गं परिपालयत. भगवन्तं श्रीगोवर्धनधारिणं स्वकल्याणकारिणमनलसाः सेवध्वं. अयं हि साक्षात् कल्पद्रुम इव स्वभक्तमनोरथान् पूरयितुमिहावतीर्ण इति वः सर्वेषां प्रत्यक्षमेव. इत ऊर्ध्वमहं मौनं धारयिष्यामि तदिदानीमहं चरमं वदामि—सदैव श्रीनाथं सेवमानानां पुष्टिमार्गानुयायिनां सततं कल्याणमेव भवेदिति. इति.

इमं चामृततुल्यं श्रीमदाचार्यपादानामुपदेशं निशम्य सर्वेऽपि शिष्याः सावधानाः परमसंतोषान्विता बभूवुः. अचिरादेव परममाननीयाः श्रीमदाचार्यचरणाः सर्वाश्रमजातस्यान्तिममाश्रमं परमहंसरूपं स्वीकृत्य मौनमवलंब्य तस्थुः.

( ४ )

अथ परमहंसाश्रमरीत्या केवलं कौपीनं स्वीकृत्य सप्तदिनपर्यन्तं श्रीमदाचार्यचरणाः परमपवित्राया विष्णुपद्यास्तीरे निवसन्तो भगवल्लीलाप्रवेशसमयं महतौत्सुक्येनापालयन्. यथा च परमपतिव्रता चिरं पतिदर्शनरहिता ग्रामादागच्छन्तं स्वपतिमौत्सुक्येन ध्यायति यथा वा बालो वत्सः स्वमातुर्वनान्तरादागमनवेलां प्रतिपालयति तथैव श्रीमदाचार्यचरणा अपि भगवतो वैकुण्ठे लीलादर्शनार्थं परमौत्सुक्येन कथंचिदवर्तन्त. ततः शीघ्रमेव सप्ताशीत्युत्तरपंचदश-

ताब्दीयाषाढशुक्लपक्षस्य द्वितीयो दिवसः समाययौ. पुष्यनक्षत्रान्वितं तं समयमनुकूलं मन्वानाः श्रीमदाचार्यचरणाः प्रातरारभ्य केवलं परमात्मनाम घोषयन्तः सर्वं वासुदेवस्वरूपं पश्यन्तः परमानन्देन ववर्तिरे. सर्वे शिष्याश्च प्रभातमारभ्य तत्रैव न्यवसन्.

अथ भगवान् सहस्ररश्मिः श्रीमदाचार्यचरणेभ्यः श्रीवैकुण्ठमार्गं प्रदर्शयितुमिव स्वामिभक्तसेवक इव वियन्मध्यमारुरोह. दिनमणौ वियन्मध्यमारूढे सति दिव्या दुन्दुभयः स्वर्गेऽनदन्. तान् दुन्दुभिनादानाकर्ण्य सर्वे देवास्तथा देवर्षयः श्रीमदाचार्यचरणानां सत्काराय वैकुण्ठमार्गमलंचक्रुः. सर्वा अप्सरसः समं गन्धर्वकिन्नरैरनृत्यन्. देवसेवकाश्च मन्दारपुष्पाणि भुवि चिक्षिपुः. एवं सर्वं सन्नाहं वीक्ष्य श्रीमदाचार्यचरणाः श्रीगोवर्धनधारिणस्तृतीयाज्ञां स्वीकृत्योत्थिताः कौपीनमात्रवसनाः सानन्दं प्रणिपततः सर्वान् शिष्यगणान्विलोक्य परमपवित्रं भागीरथीजलं प्राविशन्.

अत्रान्तरे श्रीगोपीनाथप्रभृतयः सर्वे संबन्धिन आययुः. तानपि केवलं प्रेक्ष्य पाषाणखण्डे सर्वसारभूतं श्लोकत्रयं लिखित्वा भगवतो नाम घोषयन्तो ज्वालापुञ्जरूपेण वैकुण्ठमागच्छन्. तदानीं वियति विमानसंहतिरतिनिबिडाऽभवत्. अविरतं दिव्यपुष्पवृष्टिरपि. सर्वे वैष्णवाश्च स्नेहातिशयेन श्रीमदाचार्यचरणवियोगविह्वला अपि तत्कृतमुपदेशं तथा कर्तव्यं च सम्यक् स्मरन्तो भगवद्भक्तिविधाने कृतनिश्चया भगवल्लीलादिकं विधाय सर्वान् संतोषयामासुः.

---




१ गुर्जराणामुद्धारः.
२ प्रायःसर्वसनातनधर्मानुयायिषु कृपा.
३ भक्त्युत्कर्षः.
४ परस्परद्वेषनिरासः.

समाप्तकल्पमेव श्रीमदाचार्यचरणानां पावनं चरितं. अधुना श्रीमदाचार्यचरणैरस्मिन् भूतलेऽवतीर्य किमनुष्ठितं तत्सिंहावलोकनन्यायेन संक्षेपतोऽनुवदामि.

( १ )

श्रीमदाचार्यचरणैरनुष्ठितेषु सर्वेषु कार्येषु प्रथमं कार्यं गुर्जराणामुद्धार इत्यहं मन्ये. वाचकाः! अस्य सम्यक् विज्ञानार्थं प्रथमं गुर्जरवृत्तं सविस्तरं निरूपयामि.

एते सर्वेऽपि गुर्जरदेशनिवासिन आर्याणां वंशजा एव. आर्याणामागमनात्पूर्वं ये खल्वत्रानार्या अवसन् ते च संप्रति तत्र न सन्त्येव. सन्तोऽपि वाऽत्यल्पा एव. यदा च सर्वे तद्देशवासिन आर्यवंशजाः कर्मकाण्डोक्तरीत्या कर्माणि समाचरन्तो यज्ञान् व्यधुस्तदा तत्र हन्यमानानां पशूनां संघातं वीक्ष्य केषांचिन्मनसि दया पदमादधौ. अत्रान्तरे मगधदेशे बुद्धो नाम शुद्धोदनपुत्रः कश्चन परमतपस्वी विद्वान् प्रादुरभवत्. स च यज्ञादिषु क्रियमाणां पशु-

हिंसां वेदोक्तामपि अन्याय्यां मन्यमानस्तन्निषेधाय प्रायतत. क्रमेण स्वसमानचित्तवृत्तीन् सहायांल्लब्ध्वा प्रबलो बभूव. अचिरादेव सर्वस्मिन्नपि आर्यावर्ते सर्वानपि यज्ञान् प्रतिबबन्ध. अयं गुर्जर-देशोऽपि तत्समीपवर्ती शीघ्रमेव तदनुयायी बभूव.

एवं प्रबलीभूते बौद्धवादे प्रतिबद्धेषु च यज्ञादिषु हिंसानिवृत्ता अपि जनास्तस्यान्यानि सनातनधर्मस्य मुख्यतत्वविरोधीनि तत्वानि स्वीचक्रुः तत्र प्रधानं निरीश्वरवाद इति. तस्य हि बुद्धस्येदमभिमतं यन्नास्ति कोऽपि अस्य जगतोऽधिष्ठातेति.

एवं निरीश्वरवादे प्रबले तदनुयायिनः सर्वेऽपि क्रमेण तमेव वादमाश्रित्य चिरं संचितामास्तिक्यबुद्धिमत्यजन. तेन बहुलदुःखपरं-परासु समापतितासु भगवान् परमात्मा विभिन्नस्थले नानासाधुवरा-नुत्पाद्य तद्द्वारा सर्वत्रास्तिक्यभावं स्थापयामास. परन्तु वणिग्बहुले गुर्जरदेशेऽज्ञानाधिक्येन तैर्जिनप्रभृतिभिः स्थापितं नास्तिक्यं न दूरमभवत्. तदज्ञानं प्रौढप्रतापैः श्रीमद्वल्लभाचार्यचरणैर्निराकृत्य सर्वेऽपि गुर्जरदेशवासिनोऽनुगृहीता इति निःसंशयं भगवद्भक्तानां संतोषदं. बान्धवाः ! यथा वयं सर्वेऽपि आर्यवंशजा भगवद्भक्तिमा-श्रित्य सुखं लभामहे तथा सर्वैरपि भूतलवासिभिरवश्यं सुखिभिर्भा-व्यमिति वाञ्छामः. न भगवद्भक्ताः कृपणाः. यथा हि भगवानत्यु-दारशीलस्तथैव तदीया दासा अपि.

( २ )

गुर्जरदेशवासिनः सनातनधर्मानुयायिनो विधाय श्रीमदाचार्यच-रणैर्न केवलं त एवोपकृताः किंतु सर्वे सनातनधर्मानुयायिनः. तथाहि सनातनधर्मस्य न खलु तत्वं यज्ञादि, किंतु कयापि रीत्याऽखण्डस्य

जगच्चालकस्य चेतनतत्वस्याज्ञेभ्यो जनेभ्यो बोधनं. तस्य बोधनार्थै-वेमे सर्वेऽपि यज्ञादयो विधयः. एवंस्थिते यदि तस्यैवोच्छेदो भवेन्नूनं सनातनधर्म एवोच्छिन्नो भवेत्. बौद्धैस्तु क्षणभंगवादिभिर्यज्ञादि-हिंसानिषेधेन न सनातनधर्मविरोधः कृतः, किंतु सर्वस्य तथा तत्का-रणस्याऽपि क्षणिकत्वस्वीकारेण. तस्मात् सर्वत्र श्रीहरेर्देवालयानि विधाय भक्तिमार्गप्रसारयद्भिरस्ति स्वतंत्रेच्छं चेतनं तत्वमिति घोष-यद्भिः श्रीमदाचार्यजरणैः कृत्स्नस्यापि सनातनधर्मस्य महदुपकृतम्.

( ३ )

श्रीमदाचार्याणां तृतीयं महाकार्यं भक्त्युत्कर्षः. श्रीमदाचार्यचर-णानां प्रादुर्भावात् पूर्वमपि भक्तिरासीत्, परं च सांऽगत्वेन नतु मुख्यतया. रामानुजादयो हि मोक्षसाधनत्वेन भक्तिं स्वीकुर्वन्ति स्म. अद्वैतवादिनोऽपि तथैव. कर्मकाण्डिनस्तु केवलं कर्मांगत्वेन. श्रीम-दाचार्यचरणाः परमात्मभक्तिमेव परमं फलमुक्त्वा मोक्षं वैकुण्ठप्राप्ति-लक्षणं गौणं फलमाहुः. नैवं केनापि अन्येनाचार्येणोक्तं. तस्मादाधु-निको दृश्यमानः सर्वोऽपि भक्त्युत्कर्ष आचार्यचरणैरेव कृत इति निःसंशयं वदामि.

( ४ )

वाचकाः ! पूर्वोक्तरीत्या श्रीमदाचार्यचरणैर्योऽयं भक्तिमार्गः स्थापितस्तस्येदमपि प्रयोजनं यत्तेन चतुर्णामपि वर्णानां परस्परद्वेषो नामशेषोऽभूदिति. तथाहि. यदा खल्विमे चत्वारो वर्णाः स्वस्वविहि-तकार्याणि कुर्वन्त आसंस्तदा ते सर्वेऽपि सांसारिकस्य सुखस्य परां काष्ठां प्रापुरिति सर्वेऽपि जना जानन्ति. साम्प्रतमैश्वर्यस्य परां काष्ठामारूढाः पाश्चात्यदेशा यदा केवलमश्रूयमाणनामान आसं-

स्तदाऽयं देशः सर्वमान्य आसीदिति सार्वजनीनं. अथ गच्छति काले ते सर्वेऽपि चत्वारो वर्णाः स्वोत्कर्षस्य कारणं परस्परैकमत्यं विस्मरन्तः परस्परमद्विषुः. तेन च द्वेषेण दुर्बलानस्मानिमे महंमदीयाः पराजित्य बन्दिनश्चक्रुः. ते च राजनीतिचतुराः परस्परद्वेषं सम्यक्प्रज्वालयन्तः सुखेन राज्यान्यत्राकार्षुः. तदिदमनर्थजातमालोक्य सर्वे पुरुषधौरेयास्तत्कारणं नाशयितुं परं प्रायतन्त, परंतु यावत्कालं लौकिक इव पारमार्थिकेऽपि कर्मणि न चतुर्णामपि वर्णानां समानामर्हतां स्वीचक्रुस्तावत्सामग्र्येण न यशोऽलभन्त. एतत्सर्वमालोच्य साधुवरा वैदिकं कर्मकाण्डोक्तं कर्माचरणं प्रतिबध्नन्तस्तस्य स्थाने परमात्मभक्तिमेव निवेशयामासुः. श्रीमदाचार्यचरणैश्च सर्वथा तुलसीमालां वितीर्य श्रीहरेर्भक्तिरेवोपदिष्टा. तेन शान्तपरस्परद्वेषा भारतवासिन ऐक्यमत्येन वर्तमाना यवनान् परमबलाढ्यानपि अजयन. रजपूतक्षत्रियाश्चानेनैव कारणेन स्वपावित्र्यमरक्षन्. सर्वेष्वपि तैस्तैरामानुजप्रभृतिभिराचार्यवरैः स्थापितेभ्यः संप्रदायेभ्य एष पुष्टिमार्गः परं परस्परद्वेषं शमयितुं प्रायतत. तेनायमेव प्राधान्येन भारतभूमौ विख्यात इति ज्ञेयम्.

प्रियबान्धवाः! यैः खलु स्वीयं पवित्रमायुर्दीनानां भारतवासिनां जनानामुद्धाराय यापितं. यैश्च सर्वत्र लौकिकालौकिकोभयसुखदा भक्तिः सर्वत्र प्रसारिता. अगणितानि दुःखानि विषह्य पृथ्वीपर्यटनानि विधाय समग्रा लोकस्थितिः प्रत्यक्षीकृता; तेषां खलु जगद्वंद्यानां श्रीमहाप्रभुवल्लभाचार्याणां कार्यराशेर्लेवमपि गणयितुं कः शक्नुयात्.! तस्मात् कृतमिदं चापलं विनयेन तच्चरणयोः समर्पयित्वा प्रकृतमनुसरामि.



# १४ संक्षेपणाग्रिमवृत्तसंग्रहः

१ श्रीविठ्ठलेश्वरचरितम्.
२ श्रीनाथस्य नाथद्वारागमनम्.
३ सुवर्णसूत्ररचना.
४ अद्यपर्यन्तं तद्वृत्तम्.

( १ )

एवं सर्वत्रापि भारते परममान्यं सनातनधर्मरक्षकं भक्तिमार्गं प्रचार्य वैकुण्ठंगतेषु तत्रभवत्सु सकललोकवन्दनीयचरणारविन्देषु श्रीमहाप्रभुवल्लभाचार्यचरणेषु सर्वेऽपि तदीया अनुयायिनः परं शोकमग्ना अभवन. तथापि तैरुपदिष्टस्य पुष्टिमार्गस्य सेवनं तथा वर्धनमेव स्वकर्तव्यं मन्यमाना विवेकावधूतशोकावेगाः सर्वे वैष्णवाः श्रीमदाचार्याणां ज्येष्ठं पुत्रं श्रीगोपीनाथसंज्ञकं पुरस्कृत्य पुष्टिमार्गपीठाधीश्वरं चक्रुः. तेऽपि श्रीगोपीनाथाचार्याः सर्वेषां पुष्टिमार्गानुयायिनामाग्रहं वीक्ष्य कथमपि स्वपितृचरणवियोगदुःखं विस्मृत्य तदीयमौर्ध्वदेहिकं संन्यासाश्रमानुरोधेन व्यधुः.

ततश्च ते श्रीगोपीनाथाचार्याः कतिपयदिवसैर्भगवतः श्रीनाथस्य सेवार्थं श्रीगिरिराजयात्रामकार्पुः. साक्षात्कृत्य च श्रीनाथं तदीयसेवाभाण्डानि सर्वाण्यपि रजतमयानि अकुर्वन्. एवंव्यतीतेषु त्रिषु वर्षेषु एकदा श्रीगोपीनाथाचार्याः स्वपुत्रेण पुरुषोत्तमेन समं श्रीनाथ-

सेवार्थं गिरिराजमागत्य न्यवसन्. तत्र श्रीपुरुषोत्तमः परमसुन्दर इति भगवान् श्रीनाथस्तं स्वहस्तेन गृहीत्वा स्वलीलायां स्थापयामास. श्रीगोपीनाथाचार्याः स्वपुत्रस्य बाल्य एव भगवल्लीलाप्रवेशं विलोक्य संतुष्टाऽपि लोकरीतिमनुसृत्य खिन्नाः कतिपयमासं तत्रैवावसन्. ततश्च ते सपरिवारं जगन्नाथक्षेत्रं गतास्तत्रैव भगवल्लीलायां समाविष्टा अभवन्.

एवमल्पेनैव कालेन श्रीमद्वल्लभाचार्यचरणानां ज्येष्ठपुत्रान् श्रीगोपीनाथाचार्यान् वैकुण्ठवासिनो विलोक्य सर्वे वैष्णवाः खिन्ना अपि श्रीमदाचार्याणां द्वितीयपुत्रं श्रीविठ्ठलेश्वरं पीठाधीश्वरं चक्रुः.

वाचकाः! यथा हि प्रौढप्रतापशालिनः श्रीमदाचार्यमहाप्रभुचरणा अस्य पुष्टिमार्गस्य प्रवर्तका अभवंस्तथैव तस्य पोषका अपि इमे विठ्ठलेश्वरदीक्षिता एव. यदि श्रीमदाचार्यचरणेभ्योऽनन्तरं श्रीविठ्ठलेश्वरदीक्षिता नाभविष्यंस्तदाऽयं पुष्टिमार्गो दृढसमारोपितमूलोऽपि नैतावतीं वृद्धिमलप्स्यत. तस्माद्यथा श्रीमद्वल्लभाचार्याणां चरितं हृदयंगमं तथैवैतेषामपीति तद्यथामति सविस्तरं निरूपयामि.

जगदीशस्य नियोगेन श्रीगोपीनाथाचार्येषु वैकुण्ठंगतेषु सत्सु तदीयाः कनिष्ठबन्धवः श्रीविठ्ठलेश्वराः पीठाधीश्वरा अभवन्निति पूर्वमेव निवेदितं. तस्मिन् समये श्रीगोपीनाथाचार्याणां पत्नी केनापि कारणेन दूषितमानसाऽकलहायत. कलहायमाना च सर्वं ग्रंथभाण्डारं तथा द्रव्यसंग्रहं च स्वायत्तमकरोत्. अत्युदाराः श्रीमद्विठ्ठलेश्वरा यत्किंचिदपि प्रतीपमनाचरन्तः सर्वमेव नूतनमकार्षुः. अचिरादेव तेषां तपःप्रभावेण तथा श्रीनाथसेवामाहात्म्येन समाकृष्टा वैष्णवाः प्रतिदिनमगणितास्तत्सेवार्थमागच्छन्. तेन तेषामैश्वर्यं परमवर्धत.

श्रीविठ्ठलेश्वरदीक्षिताश्च गृहकलहं शान्तकल्पमवेक्ष्य प्रथमं श्रीनाथसेवाविधिं पुनर्व्यवस्थापयामासुः. ये खलु श्रीनाथपाकशालायां श्रीमदाचार्यचरणैर्वंगवासिनः श्रीचैतन्यशिष्याः स्थापितास्ते च लौकिकीं बुद्धिमनुसृत्य श्रीनाथसेवायां तथा सावाधाना नालक्ष्यन्त. तांश्च पुनः पुनः प्रबोध्यापि अनवहितानवलोक्य श्रीविठ्ठलेश्वरदीक्षितास्तान् श्रीनाथसेवातो दूरीकृत्य भगवतः श्रीनाथस्याज्ञया तत्स्थाने गुर्जरब्राह्मणान् स्थापयामासुः. तेऽपि निसर्गत एव भगवद्भक्तिपरा महता प्रेम्णा श्रीनाथसेवां चक्रुः.

एवं व्यवस्थाप्य श्रीविठ्ठलेश्वरदीक्षिताः स्वयं श्रीनाथसेवाव्ययमपि व्यवास्थापयन्. प्रतिवर्षं लक्षमुद्राव्ययः श्रीनाथसेवार्थं नियमित आसीत्. तथैव सर्वेऽपि उत्सवाः श्रीभगवत आज्ञामनुसृत्य नियमिताः. तेन भाविकजनानामतीव संतोषः समभवत्. प्रतिदिनं श्रीमथुरानिवासिगोपालेभ्य एकं दधिभाण्डमानीयान्यत्सर्वमपि दुग्धदध्यादिकं श्रीनाथमन्दिर एव स्थापितानां गोरत्नानां भगवतो भोगार्थं स्थापयामासुः.

एवं सर्वतः श्रीनाथस्य सेवासामंजस्यार्थं प्रयतमानेषु श्रीविठ्ठलेश्वरदीक्षितेषु एकदा भगवतो भोगार्थं स्थापितेषु दधिभाण्डेषु गोपालानीते दधिभाण्डे ते किमपि दोषचिह्नमपश्यन्. तेन खिन्नास्ते सत्वरं पाकशालाध्यक्षं रामदासनामानमाहूय जगदुः ? श्व आरभ्य श्रीमथुरावासिगोपालानीतं दधि भगवतो भोगे न स्थापनीयमिति. द्वितीये दिने तदाज्ञामंगीकृत्य तथैव तेनानुष्ठिते भगवान् भक्तवत्सलः श्रीनाथो रुष्टः प्रतिदिनमिव तस्मिन्दिने न स्वीचकार भोगविषयान्. तदवलोक्य दुःखाकुलाः श्रीविठ्ठलेश्वरदीक्षितास्तत्कारणं

निरूपयन्तोऽपि तदलब्ध्वा सचिन्ता भगवन्तमस्तुवन्. दीनवत्सलः श्रीनाथः स्वयं प्रकटीभूय गोपालानीतस्य दधिभाण्डस्य त्यागमेव तत्कारणत्वेनादर्शयन्. श्रीविठ्ठलेश्वरदीक्षिताश्च भगवतः श्रीनाथस्य स्वभक्तेषु प्रेमातिशयं वीक्ष्य साश्चर्याः सानन्दाः पुनरपि तस्य दधिभाण्डस्य स्थापनाय तं पाकशालाध्यक्षमादिशन्.

इत्थं सर्वं व्यवस्थाप्य श्रीविठ्ठलेश्वरदीक्षिताः स्वाभिमतपुष्टिमार्गस्य पोषार्थं ग्रंथनिर्मितिं विधातुं मतिमकुर्वन्. यद्यपि श्रीमदाचार्यचरणैरणुभाष्यादिकं ग्रंथरत्नराशिं विधाय परमात्मसंमतः पुष्टिमार्गः समर्थित एव तथापि तत्र केवलं स्वमतमेव प्रदर्शितं. न खलु तेषां तेषामन्यदर्शनकाराणां मतानि खण्डितानि. प्रकृत्यैव भगवच्चरणाराधनतत्पराः श्रीमदाचार्यचरणाः. तत एव तैः स्वग्रंथे बाहुल्येन परमतं न खण्डितम्. तदिदं तेषामशक्तिमूलकं भावयन्तोऽन्ये वावदूका अस्य पुष्टिमार्गस्य कल्पद्रुमकल्पस्य खण्डनार्थं प्रायतन्त.

* तदेतत्सर्वमवलोक्य श्रीविठ्ठलेश्वरदीक्षिताः परमतखण्डनप्रधानं विद्वन्मण्डनाख्यं ग्रंथमरचयन्. तस्य च विद्वन्मण्डनमिति नाम स्थापयतां श्रीविठ्ठलेश्वरदीक्षितानामयमभिप्रायो यत् परमतखण्डनं हि विदुषामेव शोभते न पुनर्भगवद्भक्तानां. भगवद्भक्तास्तु सदैव परमात्मभक्तावेव निमग्ना न किमपीदं रागद्वेषमूलकं कर्म कुर्वन्ति. विद्वांसस्तु खण्डनमण्डनप्रधानव्यवसायाः स्वव्यवसायं सम्यक् कुर्वन्तीति. अस्मिन् परमतनिराकरणपरे ग्रंथे प्रादुर्भूते सति अन्यमतानुवर्तिभिः साधारणमतिभिः कापुरुषैरुत्प्रेक्षिताः पुष्टिमार्गदोषाः प्रभाते तमोराशय इव क्षणादनश्यन्. पण्डितवर्गोऽपि तं ग्रंथमवलोक्य पुष्टिमार्गतत्वानां जिज्ञासामारभत. एवमन्येऽपि ये जनाः केवलमिमं मार्गं

पौराणिकं श्रद्धामूलकममन्यन्त तेऽपि युक्त्यादिप्रमाणोपष्टब्धमिमं ग्रंथं समवलोक्य मूका अभवन. अन्ये च स्वमतखण्डनादनलं द्वेषमवध्नन.

एवंप्रवृत्ते सर्वेऽन्यमतानुयायिन इमं पुष्टिमार्गं बलवत्तरं खण्डयितुमशक्नुवन्त इत्थमुद्घोपयन—अयं मार्गः केनापि भगवद्भक्तेन प्रचारितः. तस्य न जगद्गुरुत्वं, नापि सकललोकमान्यत्वं, तेन तस्य निराकरणेऽस्माभिर्न प्रयत्यत इति. तमिमं तेषां दुराग्रहमूलकं वृथादोषारोपं निशम्य सर्वे पुष्टिमार्गानुयायिनः परं क्रुद्धा अस्य दोषाभासस्य परिहाराय प्रायतन्त. ते च सर्वे मिलित्वा श्रीविठ्ठलेश्वरदीक्षितान् गोस्वामीति बिरुदं धारयितुं विज्ञापयामासुः. प्रकृत्यैव सरलास्ते श्रीविठ्ठलेश्वरदीक्षिता इमां तेषां विज्ञप्तिमाकर्ण्य विस्मितास्तमाग्रहं त्यक्तुं तानकथयन परन्तु तेषामत्याग्रहात्तदपि बिरुदं धारयामासुः. वाचकाः ? तद्दिनमारभ्य तदेवेदं गोस्वामीति बिरुदं सर्वेऽपि पुष्टिमार्गपीठाधीश्वरा धारयन्ति.

एवंरीत्या निराकृतेषु अन्यदुर्मतानुयायिदूषणाभासेषु पुष्टिमार्गकल्पवृक्षो निष्प्रतिबन्धं ववृधे. प्रवृद्धश्चागणितान् सज्जनान सुखयति स्म. श्रीविठ्ठलेश्वरदीक्षिताश्च श्रीनाथस्य सेवां तथा चक्रुर्यथा भगवान् वासुदेवः सन्तुष्टस्ताननुजग्राह.

एकदा श्रीविठ्ठलदीक्षितेषु स्वगृहवासिषु सत्सु महति प्रभाते भगवान् गोवर्धनधारी श्रीनाथः श्रीविठ्ठलदीक्षितानां भक्तिं परीक्षितुमिच्छुस्तत्राजगाम. तमागतमवलोक्य हर्षातिरेकेण मूर्च्छन्त इव परमभागवतास्ते विठ्ठलदीक्षितास्तत्परमभाग्योदयलभ्यं हरिचरणारविन्दं संपूज्य सर्वस्वं दक्षिणात्वेन वितीर्य बहिरागत्य तस्थुः. तथा सर्वानपि

स्वस्य पुत्रान् स्नुषाश्च बहिरागन्तुमकथयन्. तत्रैका स्नुषा स्वनासिकायां मुक्तालंकारं स्थापयित्वा समागच्छत्. तमवेक्ष्य श्रीविट्ठलनाथाः क्रुद्धास्तमलंकारं भगवते समर्पणाय जगदुः. इमं च श्रीविट्ठलेश्वरदीक्षितानां भक्तिविशेषं वीक्ष्य सन्तुष्टः. श्रीनाथस्तान् प्रत्यवदत्. भक्तश्रेष्ठ ? त्वया न मे सर्वस्वं दत्तं किंतु अहमेव त्वया हृतः. त्वया चानेन भक्त्यतिरेकेण श्रीमदाचार्यचरणाः सन्तोषिताः. विमलीकृतं च तदीयं यशोमण्डलं. धन्योऽसि. वत्स ! अस्मिन् मृत्युलोके मां विस्मृत्य रात्रिंदिवं धनतृष्णापरायणाः पामरा जना धनं संपादयन्ति न ते सत्यं किमपि संपादयन्ति किंतु धनाभासं. येन तु सर्वां विषयतृष्णां त्यक्त्वाऽहमेवार्जितस्तेनैव सर्वमर्जितमिति मन्ये. दुर्लभा इह जगतीतले त्वादृशा नरपुंगवाः. यावच्चन्द्रसूर्यौ दिवि तिष्ठतस्तावदयं पुष्टिमार्गः समं त्वदीयेन यशसा प्रवर्तेतेति तुभ्यमाशीर्वचनं ददामीति. एवमनुगृह्य श्रीनाथः पुनरपि गिरिराजं प्रति प्रचचाल.

वाचका ! भगवद्भक्तानां पश्यत सामर्थ्यं. यैः स्वप्रेमातिशयेन त्रैलोक्यनाथोऽपि स्वाधीनः कृतः. धन्यास्ते भक्तमुकुटमणयो, धन्यः स भक्तिमार्गो यत्रैतादृशानि रत्नान्यभवन्. अस्तु.

एवं सर्वं व्यवस्थाप्य श्रीनाथसेवां व्यवस्थापयितुमिच्छवस्ते विचारयामासुः. यतस्तेषां सप्त पुत्रा आसन्. ते च परस्परं कलहं विधाय कदाचित्परमात्मसेवां त्यक्ष्यन्तीति मन्वानाः श्रीविट्ठलदीक्षितपादास्तान् सर्वानपि श्रीगिरिराजधारिणः श्रीनाथस्य पुरतो निधाय तं विज्ञापयामासुः. भगवन् ! अचिन्त्यशक्तिस्त्वं. त्वदीयामिच्छां को वा ज्ञातुं शक्नुयात्. तन्ममैतेषु सर्वेष्वपि पुत्रेषु कस्ते रोचत इति वद. स एव त्वां सेविष्यते यस्तुभ्यं रोचत इति. एवंविज्ञप्तः स त्रैलो-

क्यनाथः केवलं गिरिधररायमेव स्वाभिमतत्वेन प्रदर्शयामास. अन्यांश्च जगाद-भवद्भिर्मदीयान्यन्यानि स्वरूपाणि स्थाने स्थाने स्थापयित्वा भक्तिमार्गवृद्धिः करणीया. समये समये च मदीयसेवाऽपि करणीया. अनेन भक्तिमार्गोऽपि वर्धेत. सर्वेषां जनानां कल्याणमपि स्यादिति.

एवं भगवतैव विहितां व्यवस्थामवलोक्य सन्तुष्टाः श्रीविठ्ठलेश्वरपादास्तीर्थयात्रां चक्रुः.

एकदा श्रीविठ्ठलेश्वरपादाः श्रीद्वारकानाथं साक्षात्कर्तुं स्वनिवासान्निर्गता मार्गे परमरमणीये मेवाडनाम्नि राजस्थानान्तर्गते देशे कानिचिद्दिनानि तस्थुः. तत्र सिंहाडानामकं रमणीयं स्थलमवेक्ष्य परमसन्तुष्टाः श्रीविठ्ठलेशदीक्षिताः स्वसहचरानवदन्. अस्मिन स्थले श्रीनाथः कतिपयवर्षानन्तरं स्वयमागत्य निवसेत्. किंतु यावदहं जीवामि तावद्भगवान् गिरिराजं न मुंचेदेवेति निश्चितमिति. तेऽपि तदिदमद्भुतं वृत्तमाकर्ण्य विस्मितास्तूष्णीं तस्थुः. सकललोकविख्यातान् श्रीविठ्ठलदीक्षितचरणांस्तत्र समागतान् कर्णाकर्णिकया निशम्य सानन्दो मेवाडाधिपतिर्महाराज उदयसिंहः स्वयमागत्य कृताभिवन्दनः शतं सुवर्णमुद्राणां तथा सुसम्पन्ननागरिकं ग्रामं चोपायनीचक्रे. श्रीविठ्ठलेशचरणा अपि तं भगवद्भक्तं सज्जनादरतत्परं क्षत्रियश्रेष्ठं मेवाडाधिपं विलोक्य सन्तुष्टा भगवत्प्रसाददानेन तमन्वगृह्णन्. प्रणम्य स्वावासं गते तस्मिन् राजनि तदीया पत्नी समं स्वकन्यया श्रीविठ्ठलदीक्षितानां दर्शनार्थमाययौ. सा च कन्या निसर्गत एव भगवदनुरागशालिनी तादृशमलौकिकतेजःशालिनं भगवद्भक्तं वीक्ष्य सानन्दा तमेव गुरुं विधातुं कृतनिश्चया जगाद-भगवन्! अहमस्मि

अनाथा कथमपि दुस्तरे संसारसागरे निपतिता. अहं चास्माद्दुःखार्णवान्निर्गन्तुकामा त्रैलोक्यनाथं श्रीनाथं शरणीकर्तुमिच्छामि. परन्तु तत्रास्ति कस्यापि गुरोः साहाय्यस्यापेक्षा. तन्मे भगवच्चरणारविन्ददर्शनार्थं सहायो भव इति.

परमोदाराः श्रीविट्ठलेश्वरदीक्षितास्तस्या राजकन्याया इदं सरलं भाषणं निशम्य सन्तुष्टास्तां भगवद्भक्तिं समंत्रामुपदिदिशुः. साऽपि राजकन्या तावतैव कृतकृत्या तां भक्तिरीतिमुपास्यमानाऽग्रे गन्तुं प्रस्थितांस्तान् गोस्वामिचरणान्विलोक्य सद्गदमवदत्-इतः परं सद्गुरुदर्शनं मे दुर्लभं भविष्यतीति. गोस्वामिचरणाश्च तदुक्तिमाकर्ण्याऽपि गभीराः सस्नेहमवदन्-वत्से ! अस्माकमेकत्रावस्थानं दुर्लभं. भगवानेव प्रतिदिनं गिरिराजादत्रागत्य तुभ्यमात्मानं दर्शयेदिति.

इत्थं निगद्य द्वारकाक्षेत्रं प्रयातेषु श्रीविट्ठलनाथगोस्वामिचरणेषु भक्तवशः परमात्मा गिरिराजधारी श्रीनाथः प्रतिदिनं तत आगत्य तस्या राजकन्याया मंदिरे क्रीडंस्तां समतोषयत्. एवं प्रयातेषु केषुचिन्मासेषु सा राजकन्या भगवतो गमनागमनक्लेशं स्वनिमित्तमवलोक्य दुःखायमाना श्रीनाथं जगाद-भगवन् ! मदर्थमत्र प्रतिदिनमागच्छतस्तेऽगणिताः क्लेशा भवन्ति. तत्किमिति गिरिराजमुत्सृज्यात्रैव न निवससि. स्वतंत्रेच्छस्य सर्वशक्तेस्ते न किमपि अशक्यमिति. श्रीनाथोऽपि तस्या राजकन्याया इदमनुरागमयं भाषणं समाकर्ण्य मुदितः प्रत्युवाच-यद्यपि त्वदीयां भक्तिमालोक्याहमत्रैव स्थातुमिच्छामि, तथापि अस्मिन् भूतले यावद्विट्ठलदीक्षिता विराजन्ते तावदहं गिरिराजादन्यत्र यत्रकुत्रापि गन्तुं न पारयामि. यथा हि श्रीविट्ठलदीक्षिता मम प्रिया न तथा कोऽपि. तस्मात्तेषु मदन्तिकमागतेषु अहमत्रागत्य निवत्स्यामीति.

इदं च भगवतः श्रीनाथस्य स्वगुरुचरणेषु प्रेम वीक्ष्य सन्तुष्टा सा राजकन्या तूष्णीं तस्थौ.

एवं सर्वं श्रीनाथसेवाविधिं व्यवस्थाप्य तथा शास्त्रप्रक्रियामपि नूतनग्रंथविधानेन निर्दोषां संपाद्य कृतकृत्या अगणिततीर्थयात्राविधानेन लब्धपुण्यसंचयाः श्रीगोस्वामिपदभूषणाः श्रीविट्ठलनाथदीक्षिता उचिते काले स्वावतारं समापयित्वा भगवदन्तिकमगच्छन. तदानीमपि सर्वेषां पुष्टिमार्गानुयायिनां वैष्णवजनानां श्रीमदाचार्यचरणवियोगजन्यमिव महादुःखमभवत्. तथापि तत्सर्वमपि विहाय ते दृढमतयस्तेषां पुत्रं गिरिधरराजमेव पुष्टिमार्गपीठाधीश्वरं चक्रुः. अन्ये च सर्वे तत्पुत्राः परमोदारा एकमत्येनावर्तन्त.

वाचकाः ! यथा हि श्रीमदाचार्यमहाप्रभुचरणैः स्वयमवतीर्यास्मिन् मर्त्यलोके कल्पवृक्ष इवेष्टकामप्रदः पुष्टिमार्गः स्थापितस्तथैव श्रीविट्ठलेशचरणैः स्वयमवतीर्यैष प्रसारित इति तदीयमपि चरितं सविस्तरं लिखितुं योग्यं, तथापि तन्मया विस्तरभयान्नानुष्ठितं. तथापि तेषां सकललोकमान्यत्वं श्रीमदाचार्यचरणानामिवेत्यत्र न संशयः. यथा हि पुष्टिमार्गानुयायिनो वैष्णवाः श्रीमद्वल्लभाचार्यचरणान् प्रति सादरास्तथैव गोस्वामिपदवीभूषणान् श्रीविट्ठलेशदीक्षितान् प्रतीति सर्वैरवधारणीयम्.

( २ )

एवं वैकुण्ठवासिषु श्रीगोस्वामिविट्ठलदीक्षितेषु तदीयः पुत्रो गिरिधरराजः श्रीनाथसेवां यथासम्प्रदायमकरोत्. तस्मिन् समये नानादेशतो विविधा जनाः समागत्य श्रीनाथं साक्षात्कृत्य स्वजन्मानि सफलानि चक्रुः. एवंप्रयाते कियति काले भारतवर्षस्य दुर्दैवेनानर्थ-

परंपरा परापतत्. वाचकाः ! अस्या अनर्थपरंपरायाः सम्यग्ज्ञानार्थमितिहासगतं वृत्तं लिखामि.

इदं मृत्युलोकगतं नन्दनवनमिव सकलरमणीयं भारतवर्षं यदा क्षत्रियकुलोत्पन्नाः श्रीरामचन्द्रवंशजाः क्षत्रियराजा अपालयंस्तदाऽत्र सकलमपि सौख्यं न्यवसत्. परन्तु यदाऽऽत्रत्यं सौख्यातिरेकं वीक्ष्य लुब्धाः परकीया यवना व्यवहारमिषेणात्रागत्य स्थातुमैच्छंस्तदा तैः समं तेषां घोराणि युद्धान्यभवन्. प्रथमतश्च निसर्गतः शूराः क्षत्रियश्रेष्ठास्तान् यवनान् पराजित्य कांदिशीकांश्चक्रुस्तथापि दृढोद्यमशीलास्ते भूयोभूयः समागत्यायुध्यन्त. अत्रत्यान् बलाढ्यान् राज्ञोऽपि समुपाजापयन्. तेन दुर्बलास्ते क्षत्रियराजाः क्रमेण क्षीणबला नामशेषा अभवन्. यवना अपि प्रथमतः स्वशत्रून्निराकृत्य पश्चात्स्वसहायान् क्षत्रियानपि अघ्नन्. तेन निर्भया यथेच्छं वर्तमानाः सनातनधर्मस्य देवालयानि तथाऽर्याणां वधूश्च अदूषयन्. तेनोद्विग्ना भारतवर्षस्थाः सर्वे जनाः परमात्मानं स्वरक्षणार्थं प्रार्थयामासुः.

यथा यथा च यवनानां विजयमानानामैश्वर्यं निरतिशयं तद्बान्धवा अद्राक्षुस्तथा तथा तेऽपि तल्लोभाकुला अत्रागच्छन्. आगताश्च पूर्वं स्थितैः स्वबान्धवैः सममयुध्यन्त. इत्थं प्रवृत्ते घोरे युद्धे दीनाः प्रजाजना अगणिताः प्रतिदिनं प्राणानमुंचन्. कस्यापि स्वास्थ्यं लेशतोऽपि नासीत्. वाचकाः ! वयं नात्र भारतवर्षस्येतिहासं लिखितुं प्रवृत्ताः किंतु श्रीनाथस्य मेवाडदेशागमनं. तत्र कारणीभूतः को वा यवनराज इति प्रसंगान्निरूपयामः. अस्तु.

एवं व्यतीतेषु बहुषु वर्षेषु बहूनि यवनकुलान्यत्रागत्य पूर्वं स्थितान् नृपान्निहत्य स्वयं राज्यमकुर्वन्. चरमो मोंगलकुलभूषणं

बाबरनामा यवनो यदाऽत्रागत्य दिल्लीश्वरोऽभवत्तदा सोऽवशिष्टान् सर्वानपि महंमदीयान्नामशेषानकरोत्. यदा च श्रीमदाचार्यचरणा इमां भारतभुवं समलंचक्रुस्तदा मोंगलकुलसंभवः सुप्रसिद्धस्य अकबरस्य पुत्रो जहांगीरनामा दिल्लीश्वर आसीत्. पश्चाच्च तदीयो ज्येष्ठः पुत्रः शहाजहानो दिल्लीश्वरोऽभूत्.

अस्मिन् यवनपतौ भारतं शासति सति स्थाने स्थाने विद्यमाना अपि यवनराजा अतिदुर्बला न तं पीडयितुमशकन्. तेन प्रजानां साधारणतः स्वास्थ्यमेवासीत्. अयं च रजपूतक्षत्रियकन्याजन्यत्वेन तादृश आर्यशत्रुरपि नासीत्. तेन सनातनधर्मपीडाऽपि नाभवत्. एवं गच्छति काले यदाऽयं वृद्धो बभूव तदा तदीयाश्चत्वारः पुत्रा राज्यार्थं कलहायमाना दुर्निवार्या अभवन्. तेषु सर्वेष्वपि कनीयान् अवरंगजेबनामा पुत्रोऽतिकूटमतिः सनातनधर्मद्वेषपर एव. स च क्रमेण सर्वान् स्वबन्धून् यमालयं प्रेषयित्वा पितरं च कारागृहवासिनं विधाय स्वयं दिल्लीश्वरोऽभूत्. स दिल्लीपतिसिंहासनमधिरुह्य प्रथमतः स्वशत्रून्नानाविधैरुपायैर्नामशेषान्विधाय ततः स्वधर्मस्य वृद्ध्यर्थं सनातनधर्मं पीडयितुमारभत. वाचकाः ! यद्यपि कस्यापि धर्मस्य वृद्धिरन्यस्य कस्यापि धर्मस्य नाशेन न भवति. यतः सर्वे धर्मपथाः कस्याऽपि एकस्य महाधर्मस्य शाखाभूता एव. नह्येकस्यां शाखायां छिन्नायां तदाश्रयीभूतो वृक्षो वर्धत इति दृष्टचरं, तथापि मूढा जना इत्थममन्वानाः परोत्कर्षासहिष्णवः सर्वदा परधर्मोच्छेदाय प्रयतन्ते. तेन रुष्टास्तद्धर्मानुयायिनो जनाः प्राणप्रियस्य स्वधर्मस्य नाशं द्रष्टुमनुत्सुकाः स्वात्मानमेव तद्रक्षणार्थमर्पयन्ति. तथासति उभयोरपि धर्मयोर्हानिर्भवति. एतस्य सर्वस्यानिष्टस्य परिहाराय सज्जनाः परधर्मं न द्विषन्ति. अस्तु.

यदा चायं क्रूरो दिल्लीश्वरः स्वशत्रूंस्तथा स्वारिमित्राणि च नामशेषाण्यकरोत्तदाऽयं सनातनधर्मस्य नाशार्थं मतिं चक्रे इति उपरिष्टान्निवेदितमेव. स हि मेने यावत्कालमिमे सनातनधर्मानुयायिनः स्वधर्ममेवोपासमाना अस्माभिर्जिता अपि जीवन्ति तावत्कालमस्माकं राज्यं न निराबाधं. यत इमे सर्वेऽपि मूर्तिपूजका अस्मान्विलासदुर्बलानवलोक्य कदाचित् संभूयोत्थाय स्वराज्यं स्थापयेयुः. तस्माद्येन केनापि प्रकारेण ते सनातनधर्मं प्रति वीतानुरागाः करणीया इति. विचिन्त्य चैवं स दुरात्मा यवनराजः सनातनधर्मानुयायिनः प्रति राजधर्मास्वीकारदोषेण द्रव्यदण्डेनायोजयत्. ते च प्रथमत एव नानाविधैः क्रूरैर्दण्डैर्व्याकुला अपि प्राणप्रियस्य स्वधर्मस्य त्यागात् परिमितं वित्तत्यागमेव स्वीचक्रुः. दिल्लीश्वरश्च तेन प्रतिवर्षमपारं द्रव्यराशिमलभत.

एवं कृत्वाऽपि यदा सनातनधर्मस्य हानिं स नापश्यत्तदा स स्थाने स्थाने विद्यमानानि सनातनधर्मस्य रक्षकाणि तीर्थस्थानानि दूषयितुं प्रायतत. न केवलमेतावदेव किंतु सुप्रसिद्धान् देवालयान् भूमिसात्कृत्वा तत्रस्थदेवप्रतिमा अपि नाशयितुमारभत. सनातनधर्मस्याधारभूता इव ये खलु विद्वांस आसंस्तान् स बलादेव समानीय स्वधर्मानुयायिनो व्यधात्. तदानीं चागणिता जनाः स्वधर्मत्यागमपेक्ष्य मरणमेवांगीचक्रुः.

एवं मदोन्मत्तं तं दिल्लीश्वरमवलोक्य श्रीनाथः स्वयमचिन्तयत्. मया हि श्रीविट्ठलदीक्षितानां पश्चान्मेवाडवासार्थं निश्चयः कृतः. परमभक्तिशालिनी मेवाडाधिपतिकन्याऽपि प्रतिदिनं तत्रागन्तुं प्रार्थयते. अहमपि तत्र गन्तुमुत्सुक एव. परन्तु अस्मिन्गिरिराजे श्रीम-

दाचार्यचरणैरहं सशास्त्रं पीठे स्थापित इति नाहमेवान्यत्र गन्तुं प्रभवामि. तदन्यं कंचन पापिनं मदीयपीठच्छेदनाय प्रेरयामि. येनाहं तत्र गंतुं प्रभवेयमिति. विचिन्त्य चैवं तमेव क्रूरकर्माणं दिल्लीश्वरं निभृतं प्रैरयत्. सोऽपि तत्प्रेरणामादृत्य त्वरितमेव तत्सकलसनातनधर्मानुयायिभिरादृतं गिरिराजगतं पीठं नाशयितुं मतिमकरोत्.

वाचकाः ! दुर्जनाः स्वकार्याणि निष्प्रतिबन्धं सिद्धान्यवलोक्य स्मयमाना आत्मानमेव धन्यं मन्यन्ते परन्तु न ते जानन्ति स्वस्य दुरितसंचयः क्रमेण परिपाकाभिमुखीभवति. यथा हि बाह्यतो नीरोगी दृश्यमानोऽपि मानवो राजयक्ष्मणाऽन्तःस्ववशीकृतः केवलमज्ञजनान् मोहयति तथैवेमे दुर्जना अन्यायसंपादितवैभवातिशयेन मूढानेव मोहयन्ति न विदुषः. यतस्ते सम्यग्जानन्ति यदेतेऽधःपतनशीला इति. तस्मान् केनापि शुभाकांक्षिणा मानवेन स्वप्नेऽपीदं न करणीयं यदन्यायेनैश्वर्यं वर्धत इति. अस्तु. प्रकृतमनुसरामः

अचिरादेव स दुरात्मा दिल्लीश्वरः समग्रवाराणसीप्रभृतितीर्थवृन्दं दूषयन्नपारं पापराशिमर्जयन् गिरिराजमपि दूषयितुकामः श्रीनाथसेवकानां पुष्टिमार्गाध्यक्षाणां समीपे दूतं प्रेषयत्. तदानीं च पीठाधीश्वराः श्रीगिरिधरलालजीचरणानामात्मजाः श्रीदाऊजीपादा आसन् परन्तु तेषां बालतया सर्वमपि व्यवहारं तदीयाः पितृव्यचरणा एवापश्यन्. स तु सेवकानीतो दूतस्तानवदत्-प्रतापशाली दिल्लीपतिर्युष्मानाज्ञापयति यद्यस्ति कश्चन विशेषो युष्मासु वा युष्मद्देवतायां वा तदा स शीघ्रमेव दर्शनीयः. अथवा राजधर्मो वा स्वीकरणीयः इतरथा गतिर्नास्ति. यदि मदीयराज्ये यूयं स्थातुमैच्छत तदा मदीयधर्मस्वीकार आवश्यक इति.

इदं च तदुग्रं दूतस्य भाषणं निशम्य सर्वे चिन्तामग्ना अभवन्. तदा पितृव्यचरणाः सहसा यथाविधि श्रीनाथं पूजयित्वा विशेषदर्शनायानुज्ञामयाचन् परन्तु अतर्क्यप्रभावशाली श्रीनाथस्तां न ददौ. तेन तेऽपि परं निराशा अभवन्. एवं स्तब्धेषु सर्वेषु मुख्याः पीठाधीश्वरा दाऊजीचरणाः सर्वानवदन्-दिल्लीपतिरपि भगवतैव विहितो भगवदाज्ञां कथमतिक्राम्येत्. तदधुना सर्वैरपि भवद्भिश्चिन्तां विहाय स्वस्वकार्याणि करणीयानि. सायंकाले भगवान् स्वयमेव कर्तव्यं बोधयेदिति.

तदिदं तेषां प्रतिवचनमाकर्ण्य सर्वे वैष्णवास्तूष्णीमतिष्ठन्. स दिल्लीश्वरदूतोऽपि प्रत्युत्तरापेक्षी तत्रैव तस्थौ.

अथ दिल्लीश्वरस्य सुकृत इव मन्दीभवति सूर्यपरितापे, परिजन इव तं त्यक्त्वाऽन्यत्र गच्छति पक्षिवृन्दे, सकलभारतजनहृदयपटल इव कोपातिरक्ते वियति, सूर्यः शनैः शनैः पश्चिमे तीर्थराजे निममज्ज. तं चान्तर्हितमवलोक्य तमःसमागमभीता इव जनाः स्वस्वनिवासेषु दीपान् प्राज्वालयन्. तदानीं शयनसेवां विधाय पिहितेषु श्रीनाथमन्दिरकपाटेषु सर्वेषु अन्येषु जनेषु सुप्तेषु सत्सु पितृव्यचरणानेकाकिनश्चिन्तामग्नानवलोक्य दुःखाकुलो भगवान् श्रीनाथः स्वसमीपवर्तिनो गिरिधरजीमहाराजानवदत्—भक्तवर ! त्वं हीतो गत्वा मदीयं मेवाडगमनवृतान्तं सर्वं निवेद्य तं चिन्तान्तुरं विचिन्तं कुरु इति. महाभागवताः श्रीगिरिधरजीमहाराजाः सत्वरमेव ततो निर्गत्य चिन्तामग्नानां श्रीपितृव्यचरणानां समीपमागत्य जगदुः-बन्धो ! चिन्तां त्यज. स्वयं हि भगवान् श्रीनाथो मेवाडदेशं गन्तुमिच्छुस्तं निमित्तं चकार. तदिच्छवः संध्यासमये रथं सन्नाहय. तमा-

रुह्य भगवान् मेवाडदेशं प्रति गमिष्यति. स च स्वयमेव स्वविशेषं प्रदर्शयंस्तं मूढं दिल्लीश्वरं विस्मितं करिष्यतीति. उक्त्वा चेत्थं ते पुनरपि श्रीनाथसेवार्थं शयनमन्दिरमाजग्मुः.

प्रभाते च ते पितृव्यचरणाः सर्वेभ्यस्तदपूर्वं वृत्तं कथयामासुः. सर्वे च मथुरावासिनस्तन्निशम्य परं दुःखाकुलाः स्वयमपि तेनैव समं मेवाडदेशं गन्तुं निरचिन्वन्. अथ समाप्ते राजभोगोत्सवे सर्वे महाप्रभुवंशजाः समं पुष्टिमार्गपीठाधीश्वरेण श्रीनाथं प्रस्थातुं विज्ञापयामासुः. परन्तु यावत्कालं सर्वे व्रजवासिनो गोपालाः समागत्य नाक्रोशंस्तावन् स प्रभुर्न ततश्चचाल. ततश्च रथमारुह्य तस्य दिल्लीश्वरस्य निवासस्थानं आग्रानामकं नगरमभिलक्ष्याश्वांश्चोदयितुं स सारथिमवदत्. तदाज्ञामनुसृत्य सर्वे वैष्णवास्तथा गोपाला रथमभितो वर्तमानाः प्रातिष्ठन्त. रथस्य पुरतस्तु बाबूमहादेवनामा वृद्धः सेवकः करदीपिकां गृहीत्वा प्रचचाल.

अचिरादेव निर्विघ्नं तन्नगरस्थितं स्वमन्दिरं श्रीनाथः सुखेन समाजगाम. सर्वेषु द्वारपालेषु सुप्तेष्वपि अनायासेन अन्तःप्रविश्य सर्वानपि अन्तः प्रावेशयत्.

तत्र निवसन्नेकदा श्रीनाथः स्वयमेव दिल्लीश्वरस्य पुरतः प्रादुर्भूय कोपतो निजगाद-रे म्लेच्छापसद ! मत्कृपया त्वं भारतवर्षस्य राज्यं लब्ध्वा मामेवावमन्यसे ! मद्भक्तान् पीडयसि ? तदित ऊर्ध्वं यद्येवं स्यात्तदा क्रूरेण दण्डेन दण्डितो भविष्यसीति. स तु पापः श्रीभगवतस्तदुग्रं रूपं विलोक्य भीतिविह्वलस्तूष्णीं तस्थौ. ततः श्रीनाथोऽन्नकूटमहोत्सवपर्यन्तं तत्र स्थातुं स्वमतिमदर्शयत्. तदाज्ञां स्वीकृत्य सर्वेऽपि वैष्णवा निर्भयमानसास्तत्रैवातिष्ठन्. अथ समाप्तेऽन्नकूटम-

होत्सवे भगवान् श्रीनाथोऽग्रे गन्तुं सर्वानादिशत्. ततश्च सर्वे ते प्रवसन्तो 'दंडोतीघाट'नामकं स्थलं प्रापुः. तत्र च सेवादिकं विधिं सर्वं स्वीकृत्याग्रे प्रचलितो भगवान् चर्मण्वत्यास्तीरे स्वनिवासमकल्पयत्. तदानीं च कश्चन यवनाधिकारी समं यवनसैन्येन तत्र समुपस्थितं श्रीगोवर्धननाथं निशम्य द्वेषेणानुदधाव. अनुधावतस्तान् यवनानवलोक्य सर्वे वैष्णवाः सचिन्ता अजायन्त. भगवान् दीनवत्सलः श्रीनाथस्तान् सर्वानपि आश्वास्य तान् यवनांस्तथाऽभीपयन् यथा ते सर्वेऽपि कांदिशीका अभवन्. प्रालपंश्च परस्परं नात्रास्ति कश्चन देवः किंतु घोरः पर्वतो भयंकरैः सिंहैरावृत इति.

एवंरीत्या सर्वान् विघ्नान्निराकृत्य भगवान् श्रीनाथः परमशूरजनरक्षितस्य धर्मावासभूतस्य राजस्थानस्य सीमां प्राप. तं च समागतमवलोक्य बुन्दीनरेशः परमधार्मिको महताऽनन्देन प्रत्युज्जगाम. सादरमसेवत च. प्रार्थयत चात्रैव स्थातुं. तथापि श्रीनाथो मेवाडदेशं गंतुं कृतनिश्चयस्तत्र स्वप्रतिमां स्थापयितुमन्वमोदत. ततश्च जोधपुरनगरं समागत्य तत्रत्येन राज्ञा कृतं स्वागतं स्वीकृत्य पुष्कर-राजतीर्थे स्नात्वा कृष्णगडनगरं जगाम. ततश्च निर्गतः 'चापसेनी'-ग्राममाययौ. तत्र चतुर्मासपर्यन्तं स्थित्वा महता मोदेन कालमनयत्.

तत्र स्थितं श्रीनाथमवलोक्य पितृव्यपादाः श्रीगोविन्ददीक्षिताः सत्वरं मेवाडाधिपतेर्यवनधूमकेतोः राजसिंहस्य समीपमागत्य श्रीनाथागमनं तस्मै निवेदयामासुः. सोऽपि तदिदमानन्दप्रदं वृत्तमाकर्ण्य परं सन्तुष्टः स्वर्गं हस्तगतमिव मन्यमानः सादरं प्रत्युद्गम्य प्रणम्य परमपवित्रं श्रीनाथस्य चरणारविन्दं प्रार्थयामास-भगवन्! इयं हि सर्वा मेवाडमेदिनी तथाऽयं देहः सर्वमपीदं भगवत एव. तद्यत्र

रोचते तत्रैव भगवता स्थातव्यं. यावदहं जीवामि यावच्च मदीया वंशजा जीविष्यन्ति तावद्युष्मत्सेवायां कदापि न्यूनं न भविष्यतीति. विज्ञप्य चैवं सर्वानपि श्रीदाऊजीमहाराजप्रमुखान् महाभागवतान् संतोषयामास.

अथ तस्माद्ग्रामान्निर्गतः श्रीनाथः क्रमेण मेवाडदेशं प्रविश्यान्तर्गच्छन्नकस्मात्कस्यापि विशालस्य वटवृक्षस्याधस्तात् स्वरथं स्थापयामास. श्रीनाथस्य च रथं तत्रैव स्थितमवलोक्य विस्मिता यदा कारणमजिज्ञासन्त तदाऽत्रैव सा राजकन्याऽवसत्तेनाहमप्यत्रैव वत्स्यामीति जगाद. निशम्य चेमां भगवदाज्ञां पितृचरणाः श्रीगोविन्ददीक्षिताः सत्वरं सर्वानाहूय श्रीनाथस्य मन्दिरं निर्मातुमाज्ञापयन. मेवाडाधिपतिरपि सर्वसामग्रीसमेतस्तन्मन्दिरं विधातुं परमसाहाय्ययन्. अचिरादेव परमविशालं श्रीनाथस्य मन्दिरं सन्नद्धमभवत्. सन्नद्धे च तस्मिन् पितृव्यचरणाः श्रीगोविन्ददीक्षिताः श्रीदामोदरलालमहाराजानां हस्तेन वैदिकविधिमनुसृत्य यथाशास्त्रं श्रीनाथं पीठाधिष्ठितं चक्रुः. परमधार्मिकः सन्मान्यो मेवाडाधिपती राजसिंहोऽपि भगवन्तं त्रैलोक्यनाथं श्रीनाथं स्वराज्यवासिनमवलोक्य स्वजन्म सफलं मेने. श्रीनाथसेवार्थं बहून् ग्रामान् ददौ. श्रीनाथं च मेवाडवासिनं निशम्य सर्वे राजस्थानवासिनो जनास्तथा राजानः सानन्दं तत्रागत्य बहून्युपायनानि वितेरुः. तेन श्रीनाथस्य कृष्णभांडगृहं कुबेरभवनमिवाशोभत.

स च कपटी दिल्लीश्वरो मेवाडाधिपतिना पूर्वमेव बद्धवैरस्तत्रैव निवसन्तं श्रीनाथमवगम्य कोपातिरेकप्रनष्टविवेकः स्वसेनां सन्नाह्य मेवाडदेशमाक्रमितुं निरगात्. तां च वार्तामाकर्ण्य निर्भयो मेवाडाधि-

पतिरपि श्रीनाथकृपाशाली महतोत्साहेन तं पराजेतुं प्रातिष्ठत. अचिरादेव तौ द्वावपि सेनासमूहौ परस्परदृष्टिविषयावभूताम्. युद्धव्यवस्थार्थं च किंचित्कालं तूष्णीमतिष्ठताम्.

अत्रान्तरे एकदा तस्य दिल्लीश्वरस्य राज्ञी बहुसेनागोपिता अरवलिपर्वतश्रियं द्रष्टुकामा तस्य स्कंधावाराज्जगाम. मेवाडाधिपतेः सकाशाद्भयमुत्प्रेक्षमाणः स कपटी दिल्लीश्वरस्तद्रक्षार्थं बहु सादिमण्डलमदात्. सा च तेन सैन्येनान्विता सादिमण्डलेन रक्षिता क्रमेण अरवलिपर्वतमध्यं गत्वा तत्र च विविधविकचकमलरुचिराणि सरांसि पश्यन्ती तस्य पर्वतराजस्योन्नतानि शृंगाणि विलोकयन्ती चिरमरमत. सायं च ततः प्रतिनिवर्तमानाऽकस्मात् स्वस्कन्धावारगमनमार्गं व्यस्मरत्. सर्वे सैनिका अपि विस्मृतमार्गाः राजकोपभिया परं व्याकुला अभवन्. सर्वेऽधिकारिणोऽपि किंकर्तव्यतामूढा अजायन्त.

अथ तदानीमेव कश्चन प्रज्वलितकरदीपिकाधारी गोपालस्तत एवागच्छन्नदृश्यत. स च पृष्टस्तत्स्कन्धावारगामिनं मार्गं तेभ्यो दर्शयितुं स्वीचक्रे. सर्वे च यवनसैनिकास्तथा स्वयं राज्ञी तमनुसृत्य जग्मुः. स च क्रमेण गच्छन्नकस्मान्मेवाडाधिपस्कन्धावारं प्राप. स्वस्कन्धावारे समागतान् रिपूनवलोक्य महाराजस्तान् बन्दीकर्तुमादिदेश. न्यवेदयच्च तद्वृत्तं दिल्लीश्वराय. स तु तन्निशम्य मूर्ध्नि अशनिना ताडित इव मुमूर्च्छ. धर्मशीलो मेवाडाधिपती राजसिंहस्तां दिल्लीश्वरस्य पत्नीं स्वस्कन्धावारागतामपि भगिनीमिवादृत्य तदन्तिके प्रेषयामास. साऽपि स्वपतिसमीपं गता तमवोचत्. नाथ ? अधुना युद्धेनालं. यो हि साक्षात् परमात्मेव न्यायचतुरो धर्मशीलश्च कथं

तेन सह मानवानामस्माकं युद्धं ! ये हि वयं केवलं परद्रव्यकान्तालोभाकुला अगणितान् मानवान्निहत्य स्ववासनाशान्त्यर्थं युध्यामहे. स तु धर्मात्मा केवलं स्वमातृभूमिस्वातंत्र्यरक्षार्थं युध्यते. नह्यस्मिन युद्धेऽस्माकं विजयस्याशाऽपि. तत्त्वरितमनेन संधाय स्वराजधानीं प्रयातु स्वामीति.

कपटशीलोऽपि दिल्लीश्वरः स्वभार्यायाः सुखेन प्रत्यागमनं विलोक्य तथा तत्कृतं सदुपदेशं च निशम्य शान्तहृदयः सत्वरं स्वराजधानीं गन्तुं मनश्चक्रे. मेवाडाधिपोऽपि दिल्लीश्वरं त्यक्तवैरं स्वराजधानीं प्रति गच्छन्तं निशम्य तदादरपरोऽभवत्. मिलितं तं जगाद दिल्लीश्वरः—राजन ? भगवत्सहायस्य ते कथं मत्तः पराजयः. तस्मिन्दिने साक्षाच्छ्रीनाथेन गोपालरूपधारिणा मदीया पत्नी त्वत्स्कन्धावारं नीता. त्वयाऽपि धर्मशीलेन सा भगिनीवादृत्य मदन्तिकं प्रेपिता. तद्धर्मशालिनो भगवत्सहायस्य तव पराजयः शक्रेणाऽपि अशक्य इति विरमामि साम्प्रतमस्मात् साहसात्. यावत्कालं त्वद्वंशजेषु इयं धर्मबुद्धिः स्थास्यति अयं च श्रीनाथस्त्वंशजानां रक्षकस्तावत्कालं कालोऽपि न त्वां जेतुं शक्नुयादिति.

प्रबले दिल्लीपतावेवंरीत्या पराभूय स्वराजधानीं गते सति स महात्मा मेवाडस्वामी श्रीनाथकृपया लब्धं जयं मन्यमानस्तं परमादरेणासेवत.

वाचकाः ! एवंरीत्या केवलं मेवाडाधिपतिराजकन्याभक्त्यतिरेकसमाकृष्टः श्रीनाथः सम्प्रत्यपि उदयपुराधीशेन सेवमानः सकलजगत्कल्याणाय तत्रैव वर्तते. सकलभारतवासिनो वैष्णवा भक्त्या तत्रागत्य तं साक्षात्कृत्य स्वपापराशिं नाशयन्तः स्वजन्मसाफल्यं लभन्ते.

( ३ )

बान्धवाः ! एवं श्रीनाथं मेवाडदेशे सकलशूरजनावासे निसर्गत एव दुर्गमपर्वतावलिपरिवेष्टिते प्रतिष्ठाप्य निश्चिन्तास्ते श्रीमहाप्रभुवल्लभाचार्यवंशजाः पुनरपि ग्रंथान्निर्मातुं मतिं चक्रुः. प्रथमतः श्रीमदाचार्यचरणैः सकलादरपात्रेषु ब्रह्मसूत्रेषु अणुभाष्यं विधाय तत्र सकलार्थानुवादित्वं दर्शितं. परन्तु पश्चात्कैश्चित्कुतार्किकैस्तत्राक्षेपः कृत इति तन्निराकरणाय श्रीविट्ठलदीक्षितैर्विद्वन्मण्डनं कृतं. तथापि सकलमतान्यनूद्य तेषां खण्डनं केनाऽपि न कृतमिति सर्वेऽपि जनास्तादृशग्रंथस्यावश्यकतां परमभावयन. एवंस्थिते मेवाडदेशं प्राप्य लब्धस्वास्थ्येषु सर्वेषु सर्वे वैष्णवगणाः श्रीपुरुषोत्तममहाराजांस्तादृशग्रंथनिर्माणार्थं विज्ञापयामासुः. ते च श्रीविट्ठलदीक्षितानां तृतीयतनुजश्रीबालकृष्णमहाराजानामात्मजाः परं शास्त्रपारगाः परमभागवताः श्रीनाथकृपाशालिनस्तादृशं ग्रंथं विधातुं मतिं चक्रुः. अस्मिन्नर्थे साहाय्यदानाय याचितः श्रीनाथस्तद्विज्ञप्तिं स्वीकृत्य तथाकर्तुमादिदेश.

अचिरादेव सुवर्णसूत्रव्याख्यां लिखितुं श्रीपुरुषोत्तमजीमहाराजा आरभन्त. ते च निसर्गत एव विमलमतयोऽपारशास्त्रज्ञानसंभारभासुरा भगवत्कृपाशालिनस्तथाऽणुभाष्यस्य टीकां लिलिखुर्यथा तां वीक्ष्य सर्वोपि पण्डितजनः सुतरां व्यस्मयत. अधुनाऽपि तादृशी सकलशास्त्रार्थप्रतिपादिनी टीका संस्कृतवाङ्मयेऽप्यन्या न दृश्यते. तत्र च निःपक्षपातेन अनुकृतानि विविधवादिनां मतान्यवलोक्य साधारणमतिरपि विद्वान् श्रीमतां श्रीपुरुषोत्तममहाराजानां पाण्डित्ये संजातादरो जायत एव. यद्यप्यस्मिन् भाष्ये वार्तिकं नास्ति तथापि इमामेव टीकां वार्तिकत्वेन संभावयामि. कः खलु अलौकिकप्रज्ञाविरहितो भगवत्कृपाशून्यस्तां द्रष्टुमपि प्रभवेत् दूरे च तां ज्ञातुं. इत एव तादृशटीकाया विधातुः कीदृशी प्रज्ञेति वाचकैरनुमातव्यम्.

तादृशटीकाऽलंकृतं भाष्यं शाणोल्लिखितो मणिरिव परमशोभत. भाष्यदूषकाश्च क्वापि पलाय्य निभृतमतिष्ठन्. त्रैलोक्यनाथमान्यः पुष्टिमार्गः सर्वथा दूरीकृतविघ्नो महता प्रेम्णा वैष्णवैरसेव्यत.

( ४ )

एवं मेवाडदेशे निवसन्तः सर्वेऽपि श्रीवल्लभाचार्यचरणवंशजाः सकलजगन्मान्याः श्रीनाथसेवातत्पराः परमानन्देनावर्तन्त. समये समये समागतान् यवनराजान्नाशयितुं मेवाडाधिपमसाहाय्ययन. तेऽपि परमादरेण तान् पूजयन्तः श्रीनाथमसेवन्त. तत्र निवसतां तेषां भक्तिं निर्विशेषामवलोक्य ते ते राजस्थानवासिनः सनातनधर्मानुयायिनो राजानः स्वस्वराज्येषु समागत्य निवासार्थं तान्विज्ञापयामासुः. परन्तु ज्येष्ठो वंशस्तस्य श्रीनाथस्य सेवार्थं मेवाडदेश एव तिष्ठन्नान्यत्र ययौ. अन्ये च कनिष्ठवंशाः सर्वत्र श्रीहरेर्भक्तिप्रसारः पुष्टिमार्गस्य परं तत्वं श्रीमदाचार्याणामभिमतं चेति मत्वा तेषु तेषु बुन्दीकोटाप्रभृतिसनातनधर्माभिमानिनृपवरपालितेषु राज्येषु कृतनिवासास्तत्र तत्र पुष्टिमार्गं प्रसारयामासुः. समये समये श्रीनाथद्वारमागत्य श्रीनाथं पूजयामासुश्च. तद्वंशजा अपि तैस्तैर्भूपालैस्तथा तत्प्रजाजनैः सम्मानिताः सुखं वर्तन्ते. श्रीनाथद्वारे मुख्याः श्रीपुष्टिमार्गपीठाधीश्वराः श्रीगोवर्धनलालजीमहाराजा विराजन्ते. तेषां तनया अपि श्रीदामोदरलालजीमहाराजाः. महाराजानां श्रीनाथचरणयोरद्वितीयां भक्तिं, तथा भक्तजनेषु वात्सल्यं, विद्वज्जनेषु अनुरागः सर्वमिदमाश्चर्यमयमेवास्ति. श्रीदामोदरलालजीमहाराजानां पितृप्रतिबिंबरूपाणां विशेषतो बुद्धिवैभवं परं विस्मयकरमस्ति. परममान्या योग्या एव ते. तेषां गुणवर्णने कः प्रभवेत्. वयं च तं

श्रीनाथमेतेषां चिरंजीवित्वाय प्रार्थयामहे. अस्तु. यथा चैते महामान्यास्तथा मोहमय्यां गोकुलनाथमहाराजा अपि. विशेषतश्चैतेषां विद्यानुरागो भक्तिमार्गप्रसारे प्रीतिश्च सर्वविश्रुता इति नास्ति वर्णनस्यावश्यताकता. भगवान् गोकुलनाथ इमानमपि चिरंजीविनो विदधातु.



# १५ उपसंहारः

१ क्षत्रियराजेष्वनुग्रहः.

२ गोरक्षा.

३ वैश्यसंग्रहः.

४ आस्तिक्यभाववृद्धिः.

( १ )

वाचकाः ! समाप्तकल्पमेवेदं परमपवित्रं सकललोकमान्यानां परमभागवतानां पुष्टिमार्गसम्प्रदायप्रवर्तकानां श्री १०८ श्रीमहाप्रभुवल्लभाचार्यचरणानां तथा तद्वंशजानां चरितं, तथापि अन्ते संक्षेपतो गुणानुवाद उपसंहारप्रसंगेन करणीय इति ग्रंथकृद्रीतिः. तामनुसृत्याहं यत्किंचिल्लिखामि. यद्यपि अगणितजनगीतः श्रीमदाचार्यचरणानां गुणसागरः क, कचाहं साधारणो मानवस्तथापि स्वकार्यनिर्वाहोऽवश्यं कर्तव्य एव. बान्धवाः ! श्रीमदाचार्यचरणानां ये खलु सद्गुणास्ते खलु सिंहावलोकनप्रसंगेन पूर्वं निरूपिता एव. सम्प्रति परममान्येन पुष्टिमार्गसंप्रदायेन तथा तत्पीठाधीश्वरैर्ये खलु जगति उपकारराशयः कृतास्तानेव संक्षेपतोऽनुवदामि.

तत्र च प्रथम उपकारः क्षत्रियराजेष्वनुग्रहः. यदा खलु श्रीमदाचार्यचरणा न प्रादुरभवंस्तदा सर्वेऽपि क्षत्रियराजाः सन्तोऽपि

परस्परैकमत्याभावादसत्कल्पा एवासन्. इमे यवनाश्च प्रथमं भारतवर्षं प्रविश्यात्रत्यान् भूपालान् परस्परद्वेषपरानवलोक्य भेदनीतिमाश्रित्य सर्वानघ्नन्. महाराजसंग्रामसिंहो यावत्कालं मेवाडमेदिनीमपालयत्तावद्यवनानां प्रवेशो राजस्थाने नाभवदिति सार्वजनीनं. तस्मिंस्तु भेदनीतिचतुरेण बाबरनामकेन दिल्लीश्वरेण यवनेन विजिते सर्वे राजस्थानवासिनोऽपि राजानो दीनवद्यवनवशा एवाभवन्. बहवस्तु दिल्लीश्वराय स्वकन्याः प्रदाय स्वरक्षां व्यधुः. इमं च क्षत्रियाणां स्वाभिमानाभावमनर्थकरं विलोक्य सर्वे भारतवासिनः परं दुःखाकुला अभवन्. परन्तु न ते तमभिमानं प्रोज्वालयितुमशकन्. यदा खलु श्रीमदाचार्यचरणा अस्य जगतः कल्याणाय प्रादुर्बभूवुस्तदा ते सर्वत्र प्रसृतं यवनसाम्राज्यं विलोक्य खिन्नाः सनातनधर्मोद्धारमिषेण तान् हीनोत्साहानपि क्षत्रियवंशजान् प्रोत्साहयितुमारभन्त. बान्धवाः ! विषयलाभलोभापेक्षया धर्मलोभ एव बलवान् सुखदश्च. यथा हि विषयलोभाकुला मानवा ऐकमत्येन कार्याणि कुर्युस्ततोऽपि अधिकं धर्मलोभाकुलाः. किंतु नैते विषयिण इव परान् पीडयेयुस्तस्मात् सर्वथा कस्याऽपि कार्यस्य सिद्धये धर्मपथस्वीकार एव वरमिति सज्जना आमनन्ति. एतत् सर्वमालोच्य श्रीमदाचार्यचरणाः श्रीगोवर्धनगिरौ श्रीनाथप्राकट्यं विधाय तद्भक्तिं सर्वत्र प्रसारयामासुः. तत्र च प्रवर्धमानं तेषामैश्वर्यं विलोक्य अवरंगजेवप्रभृतयो दिल्लीश्वराः संदिग्धाः स्वराज्यस्य ततोऽपायमाशंकमानास्तन्नाशार्थं प्रायतन्त. यथा यथा ते प्रायतन्त तथा तथा सर्वे वैष्णवास्तथा सनातनधर्मानुयायिनो भूपालाः परमकुप्यन्. कोपो हि लौकिकसम्पदः कारणं. यद्यपि कोपः परमात्मभक्तौ तथा मोक्षे

चात्यन्तं प्रतिबन्धकस्तथापि व्यवहारे सोऽत्यन्तमुपयोगी. इतरथा स तमुद्योगं न कुर्याद्येन स व्यावहारिकीं सम्पदं लभेतेति ज्ञेयम्. अस्तु.

यथा यथा ते भूपालाः स्वधर्मस्य तथा स्वोपास्यदेवतायाश्च हानिं विलोक्याकुप्यंस्तथा तथा विद्यमानं चिरारूढमपि सर्वानर्थकरं परस्परद्वेषं व्यस्मरन्. परस्परद्वेषं विस्मृत्य प्रीतिं कुर्वत्सु तेषु बलाढ्या अपि यवना दिल्लीश्वराः स्वकार्याणि विधातुं नाशकन्. यथा हि परस्परद्वेषभिन्नेषु जनेषु परोपजापः शीघ्रमेव पदमाधत्ते न तथा परस्परैक्यरक्षितेषु. बान्धवाः ! श्रीमद्भिः श्रीवल्लभाचार्यवंशजैः क्षत्रियराजाः कथं रक्षिता इत्यत्रैकमेव निदर्शनं पर्याप्तं. तदपि राजस्थानस्यैव. राजस्थाने च प्रायः सर्वे एव भूपालाः स्वातंत्र्यमण्डिता अधुनाऽपि दृश्यन्ते. किमत्रान्यत्कारणं स्यादृते श्रीवल्लभाचार्यवंशजानामनुग्रहात्. तस्मात् क्षत्रियराजेष्वनुग्रहो निःसंशयं तत्कारणमिति ज्ञातव्यम्.

(२)

बान्धवाः ! यथा हि श्रीवल्लभाचार्यवंशजैः क्षत्रियराजेष्वनुग्रहं विधाय तेषां तथाऽन्येषामपि शीलं रक्षितं तथैव गोधनमपि परं तैरेव रक्षितं. सकलेषु ऐहिकसुखेषु गोधनमपि परं सुखसाधनं. तद्विनाऽयं लोकः सत्यमेव मृत्युलोको भवेत्. यस्य च गृहे स्वल्पमपि गोधनं नास्ति स कनकराशिमण्डितोऽपि केवलं सुवर्णखनिरिव न जीवत्येव. अस्य च भारतवर्षस्य सकलमपि सौख्यं गोधनायत्तमेव. तद्विना मृत्युलोकामृतायमानं दुग्धमपि दुर्लभम्. वृषभं विना कृषिरप्यशक्या. कृषिं विनाऽन्नमपि दुर्लभमिति वक्तुं नास्त्यावश्यकता. तस्माद्भारतवासिनः सर्वधनापेक्षया गोधनमेवात्युत्कृष्टं मन्यन्ते.

एतत्सर्वमवधार्य श्रीवल्लभाचार्यास्तथा तदीया वंशजाश्च तस्यास्य गोधनस्य रक्षार्थं परं प्रायतन्त. यद्यपि सर्वे एव साधुवरा अनाथस्य सकललोकोपयोगिनो गोधनस्य रक्षार्थमुत्सुका आसन्, यथाशक्ति तद्रक्षार्थमचेष्टन्त च, तथापि यथा पुष्टिमार्गानुयायिनां तथा तत्पीठाधीश्वराणां तत् प्रधानं कर्तव्यं न तथाऽन्येषामिति खलु भेदः. श्रीवल्लभाचार्यास्तथा तद्वंशजाश्च श्रीकृष्णस्य सेवकतया गोधनस्य च भगवतोऽतिप्रियतया तद्रक्षणे परं सावधाना आसन्. किंबहुना अधुनाऽपि तेषु तेषु श्रीवल्लभाचार्यवंशजांकितेषु देशेषु अतिविपुलमेव गोधनं वर्तते. श्रीनाथाधिष्ठिते नाथद्वारे तु गावः खलु स्वर्गनन्दिन्य इवातिशान्ताः प्रभूतदुग्धदायिन्यः प्रेक्षकाणां मनांसि संतोषयन्ति. प्रेक्षका अपि दुर्लभदुग्धदेशेभ्य आगतास्तत्रागणिता गा वीक्ष्य सन्तुष्टाः श्रीवल्लभाचार्याणां तथा तदन्वयजानां यशांसि गायन्ति. समग्रे राजस्थाने यथा स्वतंत्रा राजानोऽधुनाऽपि विराजन्ते तथैव तत्रैव निर्भयं निवसन्त्यो गावो निःसंशयं श्रीमदाचार्याणां तथा तत्संतानजानां पुरुषवराणां यशोविख्यापका इत्यत्र न संदेहलवोऽपि. बान्धवाः ? अधुनाऽपि सर्वत्र गोहत्यायां जायमानायामपि राजस्थाने सा न जायत इत्यत्रापीदमेव कारणमिति भवन्तो विद्मांकुर्वन्तु. प्रकृतमनुसरामः.

( ३ )

बान्धवाः ? निरूपितं खलु सकललोकमान्यानां पुष्टिमार्गपीठाधीश्वराणां लोकोपकारकं कार्यद्वयं. अधुना ततोऽप्यधिकं लोकोपयोगि कार्यं ब्रवीमि. तच्चेत्थम्. सामान्यतो यदा चातुर्वर्ण्यं भारतवर्षे सुव्यवस्थितमासीत्तदा सर्वेऽपि वर्णाः स्वस्वकार्याणि कुर्वन्तः परस्परमुप-

कुर्वन्तो मोदेनावसन्निति न आर्याणामितिहास एव प्रमाणं. परन्तु यदाप्रभृति अमी महंमदीया इमां भारतभुवं प्रविश्यात्रत्यां क्षत्रियजातिं नामशेषां विधातुं प्रारभन्त तदाप्रभृत्येव कृत्स्नं चातुर्वर्ण्यं अव्यवस्थितमभवत्. तत्र ब्राह्मणाश्च केवलं पारलौकिकफलध्येयाः संसारचिन्तायामत्युदासत. तेन बुद्धिमन्तोऽपि वैश्याः केवलं धनार्जनप्रधानव्यवसाया लौकिकज्ञानाभावाद्यथेच्छमवर्तन्त. अत्रान्तरे केचन साधारणाः पुरुषाः साधवो नाम भूत्वा यथेच्छं लौकिकसुखसाधनं धर्माभासमुपदिशन्तस्तान् स्वपक्षपातिनश्चक्रुः. तेऽपि तेषामनुयायित्वे लौकिकसुखलाभं पश्यन्तः स्वपूर्वजानां धर्मपथं विहाय नूतनमेव धर्ममगृह्णन्. तेन प्राचीनधर्मानुयायिभ्यस्ते स्वात्मानं भिन्नं मन्यमानास्तानद्विषुः. समये समये च परैः पीडितान् वीक्ष्यात्युदासत. प्रायः कृत्स्नेऽपि वैश्यगणे एवं विपरीतवृत्तौ अन्ये सर्वेऽपि त्रैवर्णिकाः परं दुःखमाप्नुवन्. वाचकाः ? अस्मिन् मृत्युलोके यत् खलु सुखं तत्सर्वं स्वास्थ्यमूलकमेवेति सर्वेषां सम्मतं. तदपि स्वास्थ्यं वित्तमूलकमेवेति. एवंस्थिते वित्तसंपादके वैश्यवर्गे प्रतिकूले कुतः सुखस्याशाऽपि. क्षत्रियाश्च परकीयैर्यवनादिभिः पीडिता नामशेषीकृताश्च. ब्राह्मणवर्णस्तु केवलं विद्यामग्नः पारलौकिकीमेव चिन्तामकरोत्. शूद्रस्तु यस्य कस्याऽपि सेवया धन्यंमन्यो विशेषतः परकीयानामेव सेवया सुखममन्यत. एवं सर्वतः प्रतिकूले वृत्ते सनातनधर्मं को वा रक्षतु. तेन निराश्रयः सनातनधर्मः कथमपि अजीवत्.

इदं सर्वमालोच्य श्रीमदाचार्यचरणाः प्रथमतो वैश्यवर्गं सनातनधर्मानुयायिनं विधातुं प्रायतन्त. ते च सर्वे जैनधर्मानुनायिनो

बौद्धधर्मानुयायिनो वाऽऽसन्. तांश्च महता प्रयत्नेन श्रीकृष्णोपासकान्विधाय श्रीमदाचार्यचरणाः सर्वाणि कार्याणि चक्रुः.

साम्प्रतमपि अन्यमतानुयायिनामुत्कर्षापेक्षयाऽस्य य उत्कर्षो दृश्यते तत्रापि कारणं खलु वैश्यसंग्रह एव. अन्याचार्याणां यावन्तो वैश्या अनुयायिनस्ततोऽप्यधिका एवास्य पुष्टिमार्गस्य. तेन सर्वस्यापि कार्यजातस्य कारणीभूतस्य द्रव्यस्य नास्ति तावती चिन्ता. वित्तहीना हि परमबलाढ्या बुद्धिमन्तोऽपि न स्वकार्याणि कर्तुं प्रभवन्तीति नः प्रत्यक्षमेव. तस्माद्वैश्यसंग्रहं कुर्वद्भिः श्रीमदाचार्यचरणैस्तथा तद्वंशजैर्महदुपकृतं सनातनधर्मस्येति वक्तव्यमेव.

## ( ४ )

वाचकाः ! निरूपिताः खलु श्रीमदाचार्याणां तथा तद्वंशजानां कृता उपकाराः. परन्तु ते लौकिकीं दृष्टिमनुसृत्य. वस्तुतस्तु तैः श्रीकृष्णोपासनां सर्वत्र प्रचार्य योऽयमुपकारातिशयः कृतस्तस्य तुलामपि नैतेऽर्हन्ति. सोयमुपकारः सर्वत्रास्तिक्यबुद्धिवर्धनरूपः. तथाहि. ये खलु जनाः स्वतोऽप्यधिकशक्तिशालिनी परमात्मशक्तिर्वा राजशक्तिर्वाऽस्तीति स्वीकुर्वन्ति ते हि विनयेन वर्तमानाः स्वमर्यादां न त्यजन्ति. तेन लौकिकं सुखमपि ते लभन्ते. परन्तु ये स्वात्मानमेव निरतिशयश्रेष्ठं मन्यन्ते, स्वसुखमेव सुखं तदेव ध्येयं नान्यत्किमपीति जानन्ति ते यथेच्छं वर्तमानाः स्वमर्यादामुल्लंघ्य स्वयमधोगच्छन्तः परानपि अधोगमयन्ति. बान्धवाः ! यस्मिन् देशे निवासी मानवसमाजः सुशिक्षितः परोपकारी परदुःखनिवारणतत्परः स देश उन्नत इति विद्वांसो जना मन्यन्ते. इतरथाऽवनतः. तदेतत् सर्वं परमात्मसत्तास्वीकारमूलकमिति विदुषामगोचरं न. ये खलु परमात्मसत्तां

न स्वीकुर्वन्ति ते राजसत्तामपि नांगीकुर्वन्तीति वक्तव्यमेव. बहिः प्रचण्डदण्डभिया राजसत्तामादरयन्तोऽपि अन्तःकरणेन परद्रव्यकान्तालुण्ठनोत्सुका एव. एवंसति परस्परप्रेमविश्वासमूलकस्वास्थ्यसंभवस्य मृत्युलोकसुखस्य कुतः संभवः. तस्मात्सर्वैरपि स्वस्य तथा स्वसमाजस्य स्वसंतानस्य च कल्याणार्थं सर्वदोषवारिकेयमास्तिक्यबुद्धिर्वर्धनीया. ये हि जडशक्तिं स्वबुद्धिचातुर्येण वशीकृत्यात्मानं सर्वसमर्थान् मन्यन्ते ते स्वयमसमर्थाः समये प्राप्ते स्वसमाजैः समं नामशेषा भवन्ति. मानवं वा मानवसमाजं वा यथाऽत्यारूढा मदाहंकारादयो घातयन्ति तथा न भयंकरा अपि रोगाः. इमे हि अनुवंशिकरीतिमनुसृत्य तद्वंशजानपि नाशयन्ति. तस्मात् केनापि भव्यशीलेन जनेन स्वसमाजकल्याणं वांछता प्रथममिमे दोषाः समूलमुन्मूलनीयाः. अस्य दोषस्य कारणं हि निरतिशयाहंकारः. अस्याऽपि कारणं स्वशासकान्तराभावकल्पनैव. इमां दुर्बुद्धिं समाजेऽत्यारूढां नाशयितुं प्रयतमानाः साधव ईश्वरास्तित्वं महता प्रयत्नेन स्थापयन्ति. प्रायः सर्व एव समाजोद्धारका हीनं स्वसमाजमुद्धर्तुकामाः परमात्मास्तित्वं प्रतिपादयन्तः समाजोत्कर्षं प्रति आस्तिक्यबुद्धिरेव कारणमिति सिद्धान्तं प्रदर्शयन्ति. सज्जनाः! इमामेवास्तिक्यबुद्धिं समाजस्य वा मानवानां दुर्दैवतः क्षीणां पुनरपि प्रोत्कर्षयितुं श्रीमदाचार्यचरणाः परं प्रायतन्तेति महांस्तेषामुपकारः.

किंच-निसर्गत एव सरलमतयो भारतवासिन आस्तिकाः परमात्मतत्वं स्वीकुर्वन्तो नीत्यैव वर्तन्ते. परन्तु समये समये यवनादयः केवलं वैषयिकसुखलोलुपाः सामान्यतः पशुकल्पा जनाः केवलं शारीरकबलेन विजित्य तान् महति क्लेशोदधावपातयन्. तेन केच-

नाग्रिमा जनाः शारीरकबलमेव श्रेयःसाधनं नास्तिक्यमेव कल्याणप्रदमिति मन्वाना भ्रान्ताः स्वसमाजापकर्षं विदधते. तामिमां तेषां नास्तिक्यबुद्धिं विनाशयितुं सज्जनाः प्रयतन्ते. श्रीमदाचार्यचरणानां समये सर्वत्र विजयमानान् यवनान् अवेक्ष्यताननुकुर्वन्तो भारतवासिनः स्वस्य योग्यतां व्यस्मरन्. तेन तान् सुपथे स्थापयितुं भगवान् देवकीनन्दनः स्वभक्तानचोदयत्. ते च भक्ताः परमात्मभक्तिमुपदिशन्तस्तयाऽलौकिकानि कार्याणि कुर्वाणा नास्तिक्यभावं दूरीकुर्वन्तः परममावश्यकं सर्वकार्यमूलकारणं विश्वासं समपादयन्. तेन सर्वेऽपि राजस्थानभूपालाः समं समशीलैः प्रजाजनैः स्वधर्मं रक्षयितुं प्राभवन्. बलाढ्यानपि दिल्लीश्वरप्रभृतीन् यवनाधिपान्विजित्य स्वोत्कर्षं चक्रुः.

बान्धवाः ? एवंरीत्या सर्वत्र कृष्णभक्तिमुपदिशद्भिः श्रीमद्वल्लभाचार्यचरणैः सर्वत्रास्तिक्यबुद्धिमुत्पाद्य वयं परमुपकृताः. दिग्दर्शनमात्रमेतत्. वस्तुतस्तु ये खलु जगति अद्यावधि अन्यैः परोपकारपरैरुपकाराः कृतास्ततोऽपि अधिका एभिरुपकारराशयः कृता इति मन्ये. सज्जनाः ? यावन्त उपकाराः श्रीभगवतो देवकीनन्दनस्य तावन्त एव तद्भक्तानामपीति सत्यं. केवलं मया क्षुद्रबुद्धिना यथाशक्ति निरूपितमिदं चरितं श्रीमद्वल्लभाचार्याणां तथा तदन्वयजन्यानामपि. वस्तुतस्तु तादृशां यथार्थगुणवर्णने न कस्यापि शक्तिरिति साम्प्रतं तान् सर्वानपि प्रणम्य विरमामि.

---